हरिः ॐ तत्सत्

# श्रीअमृतानुभवस्य संस्कृतभाषांतरम् ।

श्रीमत्परमहंसश्रीजीवन्मुक्तयतिवरकृतम् ।

## पदबोधिन्याख्यया व्याख्यया समेतम् ।

॥ हरिः ॐ तत्सत् ॥

अथ

श्रीमत्परमहंसश्रीजीवन्मुक्तयतिवरदत्तगीर्वाणालंकरणः ।

# श्रीज्ञानेश्वरविरचितामृतानुभवः ।

## पदबोधिन्याख्यया व्याख्यया समेतः ।

स च

मुंबय्यां मुंबईवैभवाख्यमुद्रणालये " जमनादास रघुनाथदास शेट " इत्यनेन
मुद्रयित्वा प्राकाश्यं नीतः ।

शालिवाहनशकाब्दाः १८४३ । संवत् १९७८ ।



मूल्यम् रूपकद्वयम् ।

तावद्गर्जन्ति शास्त्राणि जंबूका विपिने यथा ।
न गर्जति महाशक्तिर्यावद्वेदान्तकेसरी ॥ १ ॥



Printed by C. S. Deole at the Bombay Vaibhav Press, Servants of India Society's Home,
Sandhurst Road, Girgaum, Bombay.

Published by Jamanadas Raghunathdas Sheth, at Pen, District Kulaba.

# शुद्धिपत्रम् । ❀

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ |
|---|---|---|---|
| कवल्यमपि | कैवल्यमपि | ७ | २६ |
| ...कल्याणकृतयो | ...कल्याणकृतयोः | १० | १७ |
| ऽद्याप्येव... | यद्यप्येव... | १२ | १७ |
| च द्वय... | चाद्वय... | १४ | २६ |
| यथाकारो | यथाकाशे | १५ | २६ |
| सुवर्ण | सुवर्णे | २२ | २५ |
| स्पृश्यति | स्पृशति | ३४ | ३ |
| त्वरूपेणैव | स्वरूपेणैव | ५४ | १ |
| पित्रनाम्नो | पितृनाम्नो | ५७ | ६ |
| प्रवृत्तिसाक्षेप... | प्रवृत्तिसापेक्ष... | ६० | १७ |
| ...मोक्षभावो | ...मोक्षाभावे | ६६ | २६ |
| निवष्टे | विनष्टे | ७० | २४ |
| तद्ज्ञानमेव | तदज्ञानमेव | ७२ | ५ |
| तस्या भावे | तस्याभावे | ७९ | २१ |
| अविद्याशब्देन | आविद्या शब्देन | ८८ | १२ |
| तस्य | तस्यां | ८९ | १७ |
| जनः | जनैः | ८९ | २२ |
| ...त्रिंशताहे | ...त्रिशताहे | ९२ | १७ |
| जागृति तथा | जागृतिस्तथा | १०० | १५ |
| तस्या | तस्यां | १०० | २६ |
| भो | भोः | १०९ | २० |
| ...नास्तिकल्पन | ...नास्तिकल्पनां | ११० | १३ |
| यत | यत् | ११९ | २५ |
| कुता | कृता | १२५ | ११ |
| आत्मात्मविद्वा | आत्मानात्मविद् | १२७ | ३ |
| ...विपरीतभावन | ...विपरीतभावने | १२७ | २१ |
| ...भिदायक... | ...भिधायक... | १२९ | १७ |
| निषिद्धयावधि... | निषिध्यावधि... | १३० | ९ |
| वाति | वेति | १३६ | १९ |
| ह्येतमाह | ह्येतदाह | १३६ | २१ |

* अनायासेन ज्ञेयानि कानिचिदपराण्यशुद्धान्यत्र न संगृहीतानि ।

# विषयानुक्रमणिका ।




| विषयः | प्रकरणम् । | विषयः | प्रकरणम् । |
|---|---|---|---|
| प्रकृतिपुरुषस्तवनम् । | १ | शब्दखंडनम् । | ६ |
| सद्गुरुस्तवनम् । | २ | अज्ञानखंडनम् । | ७ |
| वागृणमोचनम् । | ३ | ज्ञानाहंताखंडनम् । | ८ |
| ज्ञानाभेदकथनम् । | ४ | जीवन्मुक्तदशाकथनम् । | ९ |
| सच्चिदानन्दविवरणम् । | ५ | ग्रन्थमाहात्म्यनिरूपणम् । | १० |




हरिः ॐ तत्सत् ।

# उपोद्घातः ।

अस्यामृतानुभवग्रंथस्य कर्ता श्रीज्ञानराजो महाराष्ट्रेऽधिकषट्शतेभ्यः संवत्सरेभ्यः प्राक् समजनि । स श्रीविष्णोरंशावतार आसीदिति तदानीममन्यताधुना च महाराष्ट्रे सर्वत्र मन्यते । तेन विद्वद्वरेण केवलाद्वैतासिद्धांतप्रतिपादकोऽयं ग्रंन्थोऽनुष्टुप्छंदतुल्येन ओवीतिख्यातेन महाराष्ट्रीयेण च्छंद्सा दशप्रकरणेषु ग्रथितः । अस्मिन् ग्रंथे श्रीज्ञानराजेन मायावादखण्डनेन अजातसिद्धांत उत्कृष्टरीत्या प्रतिपादितोऽस्ति ।

श्लोकौ । यथा यथावभासो यः शिव एवेति पश्यति । तथा तथा महाभावं भजतेऽयत्नतस्तु सः ॥ १ ॥ यथा यथा प्रथा पुंसः स्वयमेव व्यवस्थिता । तथा तथानुसंधानं स्वभावेनैव पूजनम् ॥ २ ॥ इति ब्रह्मगीतायां । एतन्नामरूपात्मकं यद् भासते तत् सर्वं शिव एव पूर्णत्वेन वर्तते । एतद् गुह्यं यस्यापरोक्षरूपेण प्रतीयते तस्य पुरुषस्य यत्नं विनैव शिवपूजनं भवति । उत यद्यदेव तस्याचरणं वर्तते तत्सर्वमात्मरूपमेव नत्वन्यत् । अत एव तस्य स्वभावेनैव येन केन प्रकारेण शिवपूजनं भवेदेव । श्लोकः ॥ चिदेव पंचभूतानि चिदेव भुवनत्रयम् । एवं ज्ञात्वाधुना सम्यगहमेव चिदेव हि ॥ १ ॥ अस्यार्थः ॥ स्वरूपचैतन्यमेव भूतपंचकत्वेन विलसति । तत्कार्यं भुवनत्रयमपि चिदेव ।

उपोद्-

॥ १ ॥

अहमपि चिदेवेति मयाधुना ज्ञातम् । स्वतःसिद्धस्वसंवेद्यत्वेनाहमेव । जगदपि स्फुरणादेव प्रतीयते । श्लोकः ॥ चैतन्यस्यैकरूपत्वाद् भेदो युक्तो न कर्हिचित् । जीवत्वं च मृषा ज्ञेयं रज्जौ सर्पग्रहो यथा ॥ १ ॥ टीका । चैतन्यस्य सर्वभूतभौतिकप्रपंचाधिष्ठानप्रकाशस्य घटः प्रकाशत पटः प्रकाशते इत्यादिष्वेकरूपत्वादेकाकारत्वाद्धेतोः कर्हिचित् कस्यांचिदवस्थायामपि भेदो न युक्तो न यथार्थ इत्यर्थः । तर्हि जीवभेदः सत्यः स्यादित्यत आह जीवत्वमिति । चकारोऽप्यर्थः । अधिष्ठानसत्यत्वेन कल्पितस्य मिथ्यात्वबोधे दृष्टांतमाह रज्जाविति । यथा रज्जौ तदज्ञानाद् वक्रतादिसादृश्येन मंदांधकारे सर्पग्रहः सर्पबुद्धिरव्युत्पन्नस्य भवति न तु व्युत्पन्नस्य । तथैवात्मन्यात्माज्ञानात् प्रकाशसादृश्यादविशेषप्रकाशे चिज्जडग्रंथिरूपचिदाभासभ्रमो भवत्यविवेकिनां न तु विवेकिनामिति वेदांतसिद्धांतरहस्यम् ॥

वस्तुतस्तु न बंधो न मोक्षो न जगदुत्पत्तिः । श्लोकः । अज्ञानमेव न कुतो जगतः प्रवृत्तिः । जीवेशदेशिकविकल्पकथाऽतिदूरे ॥ एकांतकेवलचिदेकरसस्वभावे । ब्रह्मैव केवलमहं परिपूर्णमस्मि ॥ १ ॥ ( वराहोपनिषद् ) ब्रह्माज्ञानात्यंताभावात् चित्सत्त्वैव केवला । उक्तं च

श्लोकः ।

सदेवेत्यादिवाक्येभ्यः कृत्स्नवस्तु यतोऽद्वयम् ।
संभवस्तद्विरुद्धस्य कुतोऽकृत्स्नस्य वस्तुनः ॥ १ ॥ (वार्तिककाराः)
लौकिकी वैदिकी चापि नाज्ञाने दृश्यते प्रमा ।

घातः

॥ १ ॥

न निरोधो न चोत्पत्तिरित्येषा परमार्थता ॥ १ ॥ ( श्रुतिः )

नास्ति चित्तं न चाविद्या न मनो न च जीवकः ।
ब्रह्मैवैकमनाद्यंतमाब्धिवत् प्रविजृंभते ॥ १ ॥
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
न विचारपरं चेतो यस्य सोऽमृत उच्यते ॥ २ ॥

( अन्नपूर्णोपनिषद् )

यद्यदुक्तं पुराणेषु यद्यद्वेदेषु निर्मितम् ।
सर्वोपनिषदां भावः सर्वं शशविषाणवत् ॥ १ ॥
सर्वं ब्रह्मेति नास्त्येव ब्रह्म इत्यपि नास्ति हि ।
चिदित्येवेति नास्त्येव चिदहं भाषणं न हि ॥ २ ॥

( तेजोबिंदूपनिषद् )

बहु निगद्य किमत्र वदाम्यहं ।
शृणुत संग्रहमद्वयशासने ॥

सर्ववाङ्मनसातिगता चितिः ।
सर्ववाङ्मनसव्यवहारभाक् ॥ १ ॥ ( सर्वज्ञात्ममुनिः )

महाराष्ट्रभाषानभिज्ञैर्विद्वद्भिरस्यामूल्यग्रंथस्य रहस्यं ज्ञातव्यमिति मनसि कृत्वा स्वविनोदार्थं चायं तस्य गीर्वाणभाषांतरकरणे यथामति प्रयत्नः कृतः । एतस्य ग्रंथस्यातिगंभीरतया तस्मात् सिंधोर्बिंदुरिति न्यायेन स्वधी शक्त्यनुरूपं यद्गृहीतं भवति तत् सतां चरणारविंदेषु वाक्-पुष्पांजलिरूपेण समर्पितम् । विद्वद्भिस्तु नीरक्षीरन्यायेन भाषांतरे वर्तमानो गुणलेशो भवेच्चेत् स एव ग्राह्यः ।

अल्पज्ञमुमुक्षूणां हितायान्वयमुखेन स्वल्पा टीकाऽपि क्रियते । वक्ष्यमाणे प्रस्तावनावतरणे मूलग्रंथस्थ टीकाकारस्य शिवकल्याणनामधेयस्य विदुषः स्तः । तयोरपि गीर्वाणभाषांतरं कृतमस्ति ॥

हरिः ॐ तत्सत् ।

# प्रस्तावना ।



## अवतरणम्–हरिः ॐ तत्सत् ।

श्रीगुरोः स्वरूपे वरत्वं वर्तते । अत एव जयजयकारास्पदत्वमस्त्येव । कस्माद्धेतोः । चिन्मात्रत्वात्पूर्णत्वान्नित्यानन्दत्वान्नित्यकल्याणत्वात्करुणाकरत्वात्सुखघनत्वात्कालत्रयावच्छिन्नत्वाच्च । अतो बोध्यबोधकताऽभावेन नित्यकल्याणत्वाद् बोधमात्रे सति न्यूनाधिकभावविरहितत्वात् पूर्णत्वेनापि मर्यादानुल्लंघितत्वात् । एवं स्वस्वरूपेणाविचलितत्वे सति यद्यपि मया भवदीयः प्रसादो लब्धस्तथापि भवदीयस्वरूपे कोऽपि विकारो न जातः । यथा पीयूषं तन्मधुररसश्चाभेदेनैव वर्तेते तद्वदेवाहं दीनस्त्वमीश इति व्यवहारे सत्यपि स्वरूपतो न कोपि भेदो भवति । अन्यदपि । यद्वद्दिनमण्यनुगृहीतः प्रकाशो जनान् प्रकाशयति तद्वदेवाहमपि भवदनुगृहीतपथेन चरामि । भवांश्चिन्मात्ररूपः सिंधुस्तत्र भवत्प्रत्ययरूपः कल्लोलोहम् । सर्वस्वेन मद्रूपेण भवदीयं सत्स्फुरणमेव । तत्र यद्यपि क्षणिकं चपलत्वं दृश्यते तथापि तदचलत्वमेव । यतः सत्स्फुरणमन्यथा नैव भवेत् । तत्र लयोऽपक्रमाद्युदयास्तं विनैव भाति । अत एवात्मारामशब्देनाभिधीयते भवान् । किंबहुना भवान् स्वस्वरूपे रममाणोऽस्ति । तत्रैव तेन रूपेणाहमपि स्थास्ये । परमतीवाद्भुताद्वैतं स्वरूपं भवतः । अतो द्वैतस्पर्शो न भवति । अहं भवदीयो दास इत्युक्तिस्त्वौपचारिकैव । मदीया प्रवृत्तिः श्रीमत्स्वरूपादन्या न भवति । अत एव मदीयः कोऽपि क्रियोल्लेखो नैव जायते । भो गुरो भवानेव सच्चिदानन्दस्वरूपः

शिवः । भवदीया सच्चिदानन्दादिका यांबिका वर्तते तया सह स्वानुभूत्यानन्दमात्रेण स्थातुमर्हति भवान् । सच्चिदानन्दादिरूपेण भवदीयसिद्धिरुत भवत्सकाशात्सच्चिदानन्दादीनां सिद्धिरिति न वेद्मि । एतद्ज्ञापणमपि न भवति । भोः श्रीगुरो भवत्स्वरूपनिश्चयोऽधुना यथावज्ज्ञातः । तूष्णींभावेन स्थातुमुचितम् । भवतः शतपथ इति नामधेयमौपचारिकमेव । न वस्तुतः । तत्र स्वस्य स्वकीयनिश्चये कर्तृकर्माविरोधापत्तेर्निश्चायकाभावाद् भवदीयेऽनिर्धार्ये नाम निश्चेतुमशक्ये स्वरूपेंऽबिकांबाधीशश्चापि नोपलक्ष्येते । अंबिकांबाधीशाभावेऽपि भवतश्चिन्मात्रस्य शिवस्य नाभावो विद्यते । अत एव शून्यशंकापि नो कर्तव्या । अभावश्चेत्तर्हि स केन दृष्टः । अभावनिश्चायको न कोऽपि विद्यते । स्वस्य स्वकीयाभावोऽपि न केनापि कुत्रापि दृष्टः । दीपाभावे दीपद्रष्टरि पुरुषेपि दीपेन सह विनष्टे सति दीपाभावः केन ज्ञास्यते । क्षणमात्रमुग्रवेशं धृत्वा सच्चिदानंदात्मकं त्रिशूलं च गृहीत्वा त्रिगुणात्मकत्रिपुरस्य विनाशे प्रवृत्तो भवान् । त्रिपुरविनाशानंतरं सच्चित्स्वरूपेण सर्वं परिपूर्णं भवति । अस्तु । भवतश्चित्स्फुरणमेव गणेशो भवत्पुत्रत्वेन कल्पितः । तत्रैव सकलजगदारंभादौ वरिष्ठत्वं नान्यत्र । अतस्तदेव स्वसत्तया जगदुत्पत्तिं करोति । नामरूपात्मकजगल्लीलयापि स्वयं निर्विकार एव न तेन सह विकारी भवति । अहो यद्यत्कार्यं यथा यथा वा यत्र यत्र वा येन केनापि वा नियुक्तं तत्तत्कार्यं तत्सत्तया सर्वैः संपाद्यते । न तच्चेष्टया तस्य कोऽपि स्पर्शो भवति । सवितृपावकमरुतादीनां यद्यत्कार्यं वर्तते तत्तत्कार्यं तत्सत्तयैव कर्तुं समर्थाः सर्वे न तु स्वातंत्र्येण । स्वतंत्रसत्ताभावात् । नामरूपात्मकं सर्वं प्रपंचं प्रकाश्य श्रान्ताः सन्तो भास्करादयो भवत्स्वरूपे विश्रान्त्यर्थमायांति । परं भवदाज्ञापितमार्गेणैव न स्वयुक्तितः । भवदीय-

कृपाजीवनेनैव भवदीयं स्वरूपं प्राप्नुवन्ति । यत्स्वरूपं प्राप्ताः सन्तः स्वं वाऽन्यं वा न पश्यन्ति । अर्थात् प्रकाश्यप्रकाशकभावं न विन्दन्तीत्यर्थः । भोः श्रीगुरो भवत्स्वरूपे यत्प्रियत्वं वर्तते सैव वाग्देवता सरस्वती ज्ञेया । स्फुरणरूपगणेशे यदानन्दरूपत्वं वर्तते तदानन्दरूपत्वमेव सरस्वती । अस्याः सरस्वत्या अभावेन नामास्यानन्दरूपत्वस्य तिरोधानेनैतल्लोकत्रयं स्फुटं प्रतीयते । यतोऽस्यानन्दस्य तिरोधाने दुःखाभासात् सुखेच्छा जाता । इयं कल्पितसुखेच्छैव जगत्त्रयप्रपंचस्य बीजम् । अत एवैषा सरस्वत्येव जगज्जननी । किंबहुनेदं गणेशस्य गणेशत्वमप्येतदेव । तदेव भवन्नगरमायातॄणां मार्गदर्शकं भवति । अत एव गणेशेन सह वर्तमानां वागीश्वरीं भगवतीं नत्वा भवदीयचिद्भुवनं प्राप्तवानहं भवदीयभुवनस्वामित्वमपि लभेय । तत्र नागरिका नगरनाथश्च न केऽपि दृश्यन्ते । आनन्दरूपेण भवानेव सर्वदा स्थितः । तत्र गमनागमनादिकं स्फुरणमपि नास्त्येव । हे प्रभो भवदीयभुवनस्मरणमात्रेण भवद्रूपत्वमागतोऽस्मि । किंबहुना स्मरणमेव तद्भुवनं वर्तते । स्मरणास्मरणे भवत्स्वरूपस्य स्पर्शमपि न कुरुतः । अत एव गमनागमनादिना विनैव किमप्यलब्ध्वा प्राप्तवानहं भवच्चिद्भुवनमित्येतद्भवदीयचिह्नमप्राप्यापि प्राप्तवानहम् । यः खलु तत्र प्राप्तिकालो वर्तते स न कालो यतस्तत्र कालस्पर्शो न भवति । अत एव कालत्रयातीतत्वेन नित्यलब्धोऽस्ति भवान् । एवंप्रकारको यो निजबोधस्तत्र बोध्यबोधकत्वं न भवति । अतो भवानेव विट्ठलत्वेन स्वतः सिद्धो वर्तते । भो भगवन् भवत्स्वरूपप्राप्त्यर्थं यच्छ्रांतत्वं वर्तते तस्य श्रांतत्वस्य ग्रासे भवान् विट्ठलरूपेणैव समर्थोऽस्ति । यत्र नामरूपादिकं न वर्तते तत्र कुतः श्रांतत्वम् । श्रीमत्स्वरूपे शुक्लकृष्णादिकं वर्णावर्णादिकमपि न भवति । शुक्लाशुक्लादिविरहितोऽपि सर्व-

कारणत्वेन चिद्घनत्वेन सर्वकल्पनातीतत्वेन भवानेव स्थातुं समर्थः । अहो रूपारूप-
विरहितत्वेपि नामानामादिविवर्जितत्वेपि सर्वरूपेणात्यद्भुतत्वेनातिसुशोभितत्वेनापि भवानेव
विद्यते । भोः स्वामिन् त्वंपदं तत्पदं च मृदित्वाऽभेदरूपायामिष्टिकायां समपदत्वेन भेदभावविरहित-
त्वेनाभेदसच्चिदानन्दत्वेन लीलयैव विलासं कर्तुं समर्थोऽस्ति भवान् । सत्पदं चित्पदं चैतद्द्वयं भव-
दीयकरद्वंद्वम् । तेनैव करद्वयेनाऽभेदत्वेनानंदं गृह्णाति भवान् । अनेन प्रकारेण सच्चिदावेव भवदीय-
करद्वंद्वमभेदनिमित्तेनैव सच्चिदानन्दत्वमेकत्र बोधयति भवान् । तत्र निजदासत्वेन भवदीयपादार-
विंदे या मम प्रीतिर्वर्तते सैव पीतांबरं शोभते । तेन कटिबन्धनं कृतवानस्ति भवान् । तदुपरि निश्च-
यात्मिका मेखला बद्धास्ति । यस्या योगेनाऽभेदोल्लंघनं न भवति । तत्र भवदीयस्वरूपे नाभिदेश
एव ब्रह्मभुवनं वर्तते तदेव जगज्जन्मस्थानमुच्यते । स चोदरत्वेन कल्पितः । तच्च विस्तीर्णमेव
वर्तते । अत एव जगत्स्थानमपि तदेव भवति । अतो जातमपि जगन्नबहिर्गच्छति । भवदीयोदरान-
न्देनैव स्थातुमर्हति च । एवं चिन्मात्रत्वेनाविक्रिये त्वयि जगत्कार्यत्वेन विकारो
न भवति । अधुना यत्र सर्वं स्वप्नवद्भासते स एव भवतः कण्ठदेशः । तत्रैव भवान्
वैकुंठाधीशत्वेन लीलां करोति । सा लीला नापि तु रमैव । यस्या योगेन भवान् रममाणो भवति ।
यत्र सन्मात्रत्वेन रमारूपं वर्तते तत्र विश्वं सुमनमालेव प्रोतम् । अधुना यो भवतः शिरोभागो
वर्तते यश्चोपानिषदामप्युरुत्वेन वर्तते । तद्दर्शनेनैतद्विश्वं दर्शनमात्रमेवानुभूयते । स्वतःसिद्धज्ञानमात्र-
मेव दर्शनम् । नान्यत्किंचिदपि वर्तते । तेनैव श्रवणं करोति भवान् । उत वेदाधारत्वेन भवानेव वर्तते ।
भवत्स्वरूप एव वेदा निःश्वासभूता इत्युच्यन्ते । यद्यन्नानात्वं वर्तते तत्तत्सर्वं वेदत एव । अतः

श्रुतिः । येन वा पश्यति येन वा शृणोति येन वा गंधान् जिघ्रति येन वा वाचं व्याकरोतीति यो यो भेदाऽभेदव्यवहारो वर्तते तेन तेनातर्क्य एव भवान् । एतदाश्रयभूतत्वेन भवानेव विद्यते । यत्राश्रयाश्रयिभावोऽपि न दृश्यते । अधुना सर्वशेषत्वेन यद्भवद्रूपं निरूपितं तच्छेषाशेषभाषामपि न सहते । तत्स्वयमेव चिन्मात्रत्वेन शोभते । किंच मुकुटत्वं नाम सर्वोत्कृष्टत्वमप्यस्ति । किंबहुना न मुकुटत्वमपि तु चिद्रत्नमेव । यदध उपरिभागेन विनैव नित्यानंदाद्वयरूपेण तेजःपुंजः सद्विराजते । एवंप्रकारेण भवान् निजशांतिकालिंदीतटे या द्वारावती सप्तमपुरी नाम प्रसिद्धानन्दाभिरामस्तत्र निविष्टः सन् स्फुरणाख्यमर्जुनं प्रति दयार्द्रभावेन बोधयति । अतो भवानात्माराम एव पूर्णकामोऽपि । यस्तापत्रयपरितप्तानां विश्रामः सन् स्वयं स्वानन्देनाभिरमते स एवात्मारामः । स एव कृष्णनाम्नापि शोभते । श्लोकः । कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥ १ ॥ एवं यो भवतः पन्थाः प्रकाशितस्तेन पथा भवन्तं शरणं प्राप्तवानस्मि । यथाब्धौ सैंधवगतिस्तथैव ममेतिभावः । तथापि श्रीमद्दर्शनेनाहं कृपापात्रमेव भवामि । सा कृपा श्रीमत्प्रकाशादन्या न भवति । नायं प्रकाशोऽपि त्वानन्द एव । यस्त्वं पूर्णत्वेन परमानन्द एव । नित्यत्वेन नित्यानन्दत्वेनास्मज्जनन्येव । भोः श्रीगुरो भवतो जननीत्यभिधानेन भवदन्यः कोऽपि जनको न दृश्यते । अत एव श्रीमतो हृदयभूतं मम हितं यथा स्यात्तथा मन्मुखाच्छिद्रतः शब्दरचनां करोतु भवानिति भावः । शब्दरचनायाः पुरापि भवान्नास्तीति न । अपितु वस्त्येव । अत एव नित्यानन्दरूपेण प्रीतिविषयो भवत्येव भवान् । किंबहुना प्रीतिवैभवेनैव भवदीयशब्दरचनाविषयवैलक्षण्यं स्याच्चेत्तर्हि श्रीकृष्णानंदाभिधानेन यथेच्छं भाष्यसे तथापि

न किमपि विपरीतत्वं वर्तते । यथैकस्मिन्नेव मधुररसे क्षीरदुग्धादिपर्यायान्नकोऽपि भेदो भवति । तथैवास्माकं नित्यानन्दत्वे श्रीकृष्णानन्दत्वे च न कोऽपि भेदो भवति । अधुना परमगुरुः परात्पर-गुरुरिति परंपरायाः पन्थानमपि निर्विकारत्वेन भवान् दर्शयति । श्री आदिनाथ इति नामधेयात्मक-माद्यगुरुत्वमवचनेनैव सिद्धम् । मदीयोधिवासो निरंजने चिद्घने नित्यानन्द एव वर्तते । भोः प्रभो यन्नित्यानन्दाभिधानं यच्च दृङ्मात्रं द्रष्टृत्वेन विलसति तस्मै द्वैतपथमगत्वा अभेदतो मे प्रणि-पातोऽस्तु । भोः स्वामिन् श्रीमदानन्दस्वरूपे न्यूनत्वं न वर्तते । अत एवाक्रियत्वेन नमने कृतेऽप्यकृतेऽपि चाकरणमेव स्यात् । करणेनाकरणेन वोभयप्रकारेण श्रीमत्स्वरूपे न कोऽपि विकारो भवति । एषोक्तिरपि न सह्यते । यदि ज्ञानमपि न सह्यते तर्ह्यज्ञानमेव स्यादिति चेदेवमपि न भवति । ज्ञानविषयाऽभावोपि ज्ञायते । अत एवाज्ञानाभावोऽनायासेनैव भवति । स्वस्वरूपे वाणी कुण्ठिता भवत्येतदपि वाण्यैवोच्यते । एवंप्रकारेण ज्ञानव्यतिरेकेणैव ज्ञातुं शक्योऽवचने-नैव भाष्येत यदि यथोचिताः श्रीमच्चरणारविन्दे नतयो भवेयुः । भोः प्रभो यद्भवदीयाऽबा-धितत्वं वर्तते तत्रैव मन्नमनमपि वर्तते । तत्र वन्दनादिनिमित्तेन न कोऽपि विभागो भवेत् । भवत्स्वरूपनिश्चयः स्याच्चेत्तर्ह्येतत्प्रकारको निश्चयोऽपि न भवेत् । स्वप्रकाशः स्वप्रकाशेन कथमनुभूयेत । यत्रानुभवेनानुभवोऽनुभूयते तत्र न किमपि कर्तृत्वं संभवति । अतोऽकर्तृत्वमेव स्यादिति चेन्न । एवंप्रकारेण भवदीयप्रत्ययमात्रस्वरूपे यत्र प्रत्ययोऽपि न जायते तत्राप्रत्ययरूपेण भवदीयाभावोऽपि न भवेत् । अत एव श्रीमन्नित्याद्वैतस्वरूपे न द्वैत-भासोऽपि जायते । प्रत्यक्तत्वेन यत्प्रमेयं प्रमाणान् व्याप्य तिष्ठति ततः प्रमेयप्रकाशेन प्रमाणसिद्धिः ।

यतः प्रमेयेण प्रमाणानि प्रकाशितानि ततस्तानि कथं प्रमेयं साधयन्ति । यदि प्रमाणेन प्रमेयासिद्धि-र्भवति तर्ह्यनायासेनैव प्रमाणे व्यर्थत्वं भवतीति ज्ञेयम् । तस्मात्कारणात् प्रमेयप्रमाणातीतत्वेन भव-त्सिद्धिः । पूर्वोक्तप्रकारेण श्रीमन्नित्यानन्दपादारविन्दे तद्रूपेणैव मदीया विज्ञप्तिः । भोः स्वामिन् श्रीमत्स्वरूपप्राप्तिर्या मया लब्धा सैतद्रूपैव । भवदीयस्वरूपप्राप्तिरेषैव भवति । यथोदयास्ताभ्यां विनैव सवितुरुदयास्तव्यवहारो जायेत तथैव बोधाबोधादिं विनैव भवत्स्वरूपबोधः स्यादेव । अहो बोधमात्रे भवत्स्वरूपे बोध्यबोधकत्वं कथं स्यात् । यथा गुडे यन्मधुरत्वं वर्तते तत्तु गुडत्वमेव नान्यत् । तथैव ज्ञप्तिमात्रस्वरूपे यज्ज्ञानत्वं तद्भवद्व्यतिरेकेण न किमपि दृश्यते । अतःकारणादत्राद्वैत-स्वरूपे पूर्वापरत्वं कथमपि नायातीत्यर्थः । अतो हेतोः स्वरूपबोधं विनैव बोधरूपतरोऽहम् । एवं-प्रकारेण श्रीमत्कृपाप्रसादपूर्णतां गतोऽहमित्युक्तिरपि नावशिष्यते । एतत्प्रकारको भवद्बोधः सुदृढ एव जातः । एवंविधो भवत्कृपाप्रसादो मया लब्धः । इदमेवांतिमं फलम् । परमेतदन्तिमं फलं मूलदेशे स्थितमेव लब्धम् । अत एव भवत्कृपाप्रसादांतं न वेद्मि । अस्तु । एवं पूर्वोक्तप्रकारेण यदि पुण्य-शालित्वेन भवत्पादारविंदमहमाश्रये तर्हीतोन्यत् किमपि कर्तव्यमवशिष्यते किम् । तदनंतरं श्रीगु-रुभिः परमोदारत्वेनातीव कृपालुतया मां प्रति यदुपदिष्टं तच्छ्रावयिष्यामि । यथा राजा राजपदं लब्ध्वा छत्रचामरादिभिः सह वर्तमानोतीव शोभते परं राजाज्ञा स्वातंत्र्येण प्रजाजनं प्रति न प्रच-लतीति चेत् तर्ह्याज्ञाऽसतीव स्वतंत्रत्वेन नैव वर्तते । तदा राजपदमप्यल्पत्वेनैव वर्तते । अतो हेतो-र्भूमंडले साऽऽज्ञा विस्तीर्णत्वेन वर्तेत चेत्तर्ह्येव पूर्णत्वं भवेत् । तथैवात्मबोधानंतरं सर्वत्रात्मत्वदर्शनेन विनैव निजसुखजनितो यो भारः सोऽस्त्येव । अतोऽद्वैतात्मबोधे कोऽपि प्रतिबन्धो न संभवति ।

प्रस्तावना-

॥ ६ ॥

सर्वं प्रतिबन्धादिकमुल्लंघ्यैव विराजते विद्वान्। किंबहुना स्वस्वरूपबोधे सति न कोऽपि विरोधो दृश्यते। अद्वैतस्वरूपे कुतो विरोधः। क एव प्रतिबन्धः। न कोऽपीत्यर्थः। तस्मिन् स्वानुभवराड्युदिते सति तत्प्रतिबन्धात्मकतस्कराभावो जातः। एवं नो चेत्तर्हि ::स्वरूपप्रत्ययन्यूनत्वं वर्तते। अहो राजपदारूढेन तेन राज्ञा निष्कंटकत्वं संपादनीयम्। नो चेत् स्वाभाविकसुखेन स्थातव्यम्। विरोध्यभावाभावे यदि स्वस्थः स्यात्तर्हि कालांतरेण तस्यापायो भवत्येव। अत्र किंबहुनोक्तेन। ज्ञानाभिमानोऽपि न युक्तः। उत्पत्तिमत्त्वे सति कैवल्यमपि न वाञ्छेत्। ममैकस्याद्वैतबोधो जातः। अन्ये सर्वेऽप्यज्ञानेन नष्टप्राया एव। एतत्प्रकारकोऽहंकृतिरूपः सर्पो यस्य न निवृत्तः सोहंकाराजगरेण कवलीकृतः सन् प्राज्ञत्वाभिमानेन यद्यद्वचो वदेत् तत्सर्वमनर्थायैव न तु हिताय। कुतः। यस्य ममैवात्मबोधो जातो न च मत्तुल्यः कोऽप्येवंरूपोऽभिमानो न निवृत्तस्तस्याद्यापि स्वसुखानुभूतिर्न जाता। जाता चेत् कुतोऽभिमानः कुतो विषमदर्शनम्। अत एव सर्वत्रात्मत्वदर्शनं विनैव कृतकृत्यत्वं न संभवति। अहो साध्यसाधनाभावेनैव स्वरूपसाक्षात्कारं कुर्यात्। परं मयाऽऽत्मस्वरूपं लब्धमेनामभिमतिं विनैव। तर्ह्यत्र प्राप्तव्यभीत्या प्राप्तव्याभावेनैव स्थातुमुचितमिति चेत्तर्ह्येषापि स्वानुभूतिर्न भवेदेव। अस्मिन्मार्गेऽस्त्येव व्याघ्रोऽत एवानेन मार्गेण न गच्छाम इति निश्चितेऽपि कालांतरे व्याघ्रजठरे पच्यत एव। अतो व्याघ्रस्योच्छित्तिरुचिता। तयैव स्वार्थः प्राप्येत। इति न स्यात्तर्हि स्वार्थोऽपि न भवेदिति सिद्धम्। अत एव गुरुप्रसादजनितबोधखड्गं गृहीत्वा संशयविपर्ययादिकं च विनाश्य स्वात्मानुभवस्वराज्यपत्तने सुखशायी भवेत्। नो चेद्द्वयं ब्रह्मज्ञा न कोऽपि विधिनिषेधो नो वर्ततेऽत एव यथेष्टाचरणेन वर्तामहे। अथवा

ऽवतरणे.

॥ ६ ॥

वयमेव ब्रह्मज्ञा अन्ये सर्वेऽज्ञा एवेति न केषामपि संबंधो युक्तः । वयं ब्रह्मविदो ब्राह्मणा अन्ये तु सर्वे चांडालत्वेन वर्तन्ते । एवंप्रकारको यस्याभिमान उन्नतः । एवमुभयप्रकारकापि यस्य स्थिति-स्तस्याद्वैतात्मबोधो नैव जातः । अत एव सर्वत्रात्मत्वेन विनैवाक्षयशांतिर्न भवति । अपि चात्मा-नुभवाभिमानेन वेदोदितं कर्माचरणं विहायैव तिष्ठेयुस्तर्हि न शास्त्ररहस्यं तैर्ज्ञातम् । कुतः । अहो कर्मत्यागेनैव त्यागाभिमानत्वेन तत्काल एव कर्तृत्वं स्यात् । श्लोकः । कर्मानुष्ठानमज्ञानाद् यथैवोपरम-स्तथा । बुध्द्वा सम्यगिदं तत्त्वमेवमेवाहमास्थितः ॥ ( अष्टावक्रः ) ॥ एवं प्रकारेण स्वानुभवेन विनैव रचयति मनोरथमंडपम् । उताद्वैततत्त्वे ज्ञाते सति को विधिः को निषेध इत्यभिमानेन विधिनिषेध-शास्त्रं विहायैव स्वच्छंदं यथेच्छं चरति । उत जनकल्याणार्थं विधिनिषेधं गृहीत्वैव चरति । यतः श्लोकः । यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ १ ॥ ( श्रीमद्भगवद्गीता ) परमेशोक्तिरपि रोचनामात्रैव । अहो स्वतंत्रत्वं प्राप्तः सन् सर्वथैव विरोधाभावेनाद्वैतात्मनिष्ठत्वे निवृत्ताभिमानः सन् यः सर्वथैव निरभिमानत्वेन राजते तस्य विदुषः स्वात्माभिन्नत्वेन न कोऽपि लोको नापि लौकिको दृष्टः । सर्वत्रापि स्वस्व-रूपेणैव पश्यतस्तस्य को लोकसंग्रहः । न कोऽपीत्यर्थः । तस्मात्तस्य लोकत्रयेऽपि न किमपि कर्तव्य-मस्ति कर्तव्याभावेऽपि स्वभावेनैव यथेच्छाचारी सन् न चाधिकारमप्युल्लंघयति । मदीयां चेष्टाम-वेक्ष्य सर्वेपि जनास्तामनुकृत्य कल्याणभाजो भविष्यन्तीति निश्चयेन यश्चरति तस्मिन् क्व सरलत्वं वर्तते । न क्वापीत्यर्थः । स्वानुभवाभिमानेनाविहितेन पथापि न चरेत् । स्वार्थार्थी सन् न कैवल्य-मपि वाञ्छेत् । त्रिभुवनभोग्येषु यो यः सुखवाचको विषयो वर्तेत स स मदीयसुखलेशेनैव सुखदः ।

न तु स्वतन्त्रतया । श्लोकः । अखण्डानन्दरूपस्य तस्यानन्दलवाश्रिताः । ब्रह्माद्यास्तारतम्येन भवन्त्यानन्दिनोऽखिलाः ॥ १ ॥ नित्यापरोक्षः सुखघनोऽहमेक एव यत्र मयि लोकत्रयमपि लीयते । एवंप्रकारेणापरोक्षबोधवान् विद्वान् कमन्यं पश्येत् किं शृणुयात् किं जिघ्रेत् किं विजानीयात् । न किमपीत्यर्थः । अत एव स्वभिन्नविषयाभावेन स कं भावयति कस्यापि चुंबनं करोति किम् । स्वानन्दपरिपूर्ण आत्मनि विषयीभावमुतोदासीनभावमपि न जानाति । अतः स्वस्वरूपभिन्नत्वेन न किमपि स्वादयति । अहो यस्य करे चिन्तामणिर्विद्यते स किं भिक्षार्थमटेत् । तथैव स्वानन्देन पूर्णः सन् को विषयं वाञ्छेत् । यथेच्छममृतं पीत्वा तुष्टिश्च पुष्टिश्च तथा क्षुत्तृषयोर्निवृत्तिश्च येनानुभूता तस्य पुरुषस्य मृगांबुपानेच्छा कथं वर्तेत । न वर्तेत एव । तथैवाखण्डस्वानन्दपत्तने क्रीडमानस्य गंधर्वपुरविहारेच्छा न कदाप्युद्भवेत् । किं बहुनोक्तेन । अपरोक्षप्रत्ययी कोऽपि पुरुषः कैवल्यमपि न वाञ्छेत् । कुतस्तत्र वैषयिकाभिलाषः । विषयाभिलाषेणोन्मत्तः सन् कार्याकार्यं विहाय सर्वं खलु ब्रह्म इति मत्वा परस्य जायादिकं सर्वं मदीयमेवेति मन्येत चेत्तर्हि तत्र स्वात्मानुभवोऽल्पोऽपि नैव खलु । किंत्वेतादृशः पुरुष आत्मसुखविमुख एवेति ध्वनितम् । अहो भक्तिर्ज्ञानं वैराग्यं चैतत्त्रयमभेदेन नामैकरूपेण यत्र शोभते तत्रैव स्वसुखानुभवो जातः । उत पर्वतप्रायेऽप्युपरोध आयाते सति स पुरुषः स्वनिष्ठातो न प्रचलति । यतः स पुरुषः स्वात्मसुखहोलिकायां समस्तं विघ्नसमूहं तत्प्रकाशकमन्तःकरणं च भस्मसात् कुरुते । यदि कश्चित्पुरुषोऽनया स्वस्वरूपदर्शननिष्ठया स्थातुं वाञ्छेत्तर्हि तेन श्रवणं मननं निदिध्यासनं च नोपेक्षणीयानि । तैः साधनैरुदितापरोक्षवस्तुबोधः सन्नचलां शांतिं स वृणुयात् । शांतिपर्यंक उषित्वा तेन विदुषा स्वात्मसुखस्वादनं कर्तव्यम् । यथा रसना

निजरसमनुभवति तथैवेत्यर्थः। शांतिरूपया श्रिया वृतोऽयं विद्वद्रूपो राजा स्वात्मराजपदे विलसति नाम शोभते। तेनैव विलासेन यदि स विहारं कर्तुमिच्छति तर्हि स्वात्मरसैकवनवाटिकायां तेन सुखेनैव क्षणमेकं विहर्तव्यं नाम स्वात्मसुखेन विना न कोऽपि सुखानुभवः कर्तव्यः। अहमपि ज्ञानाभिमानच्छेदनं कृत्वा शांतिसदनं प्राप्तोऽस्मीति यदि प्राप्तिस्मरणं स्यात्तर्ह्येतेनैव वाटिकाविहरणेन तस्य शांतिर्भूत्वा केवलात्मा-राम एव विलसेन्नाम प्रकाशेत्। किंलक्षणा सा वाटिकेति पृच्छसि चेत्तर्ह्यस्यां वाटिकायां समाधि-रपि निजसमाधित्वं नाम विशेषतां विहाय शाखापल्लवेन विना यथा वल्ली रसमात्रेणैव शोभते तथे-यमपि चिद्रसत्वेन शोभते। शाखापल्लवविहीना केवलचिद्रसपरिपूर्णेयं वल्लिः सिद्धशिरोमणिना ज्ञानाधिराजेन कृषीवलेन स्वानुभूत्यैककृषिकर्मणा सुशोभिता कृता। केन हेतुनेति चेत्। अखिल-जनान् कलिमलक्लिष्टान् दृष्ट्वाऽतीव कृपाविष्टः सिद्धशिरोमणिः प्रत्यक्तत्त्वमेव स्वकरे ज्ञानखड्गं गृहीत्वा ज्ञानेश्वराभिधानेनाविर्बभूव। ज्ञानेश्वराभिधानं किंनिमित्तमिति चेत्। ज्ञानाज्ञाने इत्यादि-द्वंद्वरहितं केवलं ज्ञप्तिमात्रं यतो वाचो निवर्तन्ते इत्युक्तलक्षणं स्वरूपमेव स्वतो निर्विषयमपि विषयी-भावमंगीकृत्य ज्ञानेश्वरेति संज्ञयास्मिञ्जगति प्रवृत्तम्। उपरि निर्दिष्टेन ज्ञानेश्वरेणादौ गीतार्थं सम्यक् प्रकटीकृत्य सर्वैरधिकारिभिर्गीतेश्वरोऽभिज्ञापितः। यस्मिन् ज्ञाते झटिति सकलकलिकालभञ्जनं भवति। निर्धूतकलिकालकल्मषाणां मुमुक्षूणां पोषणायैनां वाटिकां निर्माय तत्र पूर्वानुभूतसकलसं-तापहारिणीं चाचलशांतिप्रदायिनीं शाखापर्णविहीनामिमाममृतलतामारोपेण विनैवातीव विस्तारेण स भगवान् ससर्ज। तथेयं वाटिकातीव शोभां च नीता। सैषामृतानुभवग्रन्थरूपामृतवल्लिश्चिद्रसामृतं धारयति। अत्रैवामृतनामधेयं साफल्यं यातम्। कथमिति चेत् तर्हि लौकिकामृतं त्वन्यसृष्टपदार्थ-

समवेतं प्रलयकाले विनश्यति । तदा त्वेतदमृतं स्वतःसिद्धतया स्वरूपेण स्थातुमर्हति । अत इदममृत-मास्वादमानः पुमानमृतरूपो भूत्वाऽवतिष्ठते नाम विनाशस्य विषयो न भवतीत्यर्थः । अस्य दर्शन-मात्रेणैव विगतसकलसंतापो मुमुक्षुः समाधिं प्राप्यातीव संतुष्टो भूत्वा सुखातिशयत्वेनैव तत्सुखानु-संधानमपि विस्मृत्य सुखरूपो भूत्वा यदोपरमते तदा स कर्तव्यस्य निर्वेदं गत इति ज्ञातव्यम् । परिपूर्णतयाऽसौ सिद्धः सर्वं खल्विदं ब्रह्मेति यथास्यात्तथाविज्ञायाद्यैः सर्वसंतापैः सह प्राप्तिस्मरणमपि तस्यामेव चिद्गंगायां निक्षिप्य चिदेकरसत्वमुपयाति । अतस्तस्य सर्वेऽप्यंतराया निवृत्ता भवन्ति । इति शृण्वतो मे मनसि तत्प्राप्तिहेतुरुल्लसितोऽभूत् । तेनैव हेतुनाकृष्टः श्रीनित्यानन्दचरणकमलभृंगी-भूतोऽहमिदमपृच्छम् । मातेवातीव कृपालुः श्रीनित्यानन्दोऽतीव प्रसन्नचेतसा मामाज्ञप्तवान् । अहमपि श्रीगुरुनिर्दिष्टेनैव पथाऽन्तःप्रविश्येतस्ततश्चक्षुः प्राहिणवम् । तत्र मया किं दृष्टमिति चेत् । सर्वं खल्विदं नित्यानंद एव । स एव सर्वमिदं व्याप्य मध्यप्यनुस्यूततां गतः । एवं दृष्ट्वा निरस्तसर्वातिशयः प्रपन्नस्वात्मैकरसश्चाहं सम्राडिव स्वैरं समचरम् । विगतसर्वद्वैतभावस्य स्वैरं संचरतो मे तस्मिन्नेव नित्यानंदाब्धौ ममत्वमपि व्यपगतम् । अतः सात्विकाष्टभावा उल्लसिताः । एतेऽष्ट भावा अपि गुणसंबन्धिका न तु स्वरूपधर्माः । एवं पूर्वोक्तप्रकारेण नित्यानन्दस्वरूपे यथेष्टमहं विहारं कृतवान् । तत्रैव विहरन्नित्यानन्दस्वरूपादभिन्नतां गतोऽहमधुना नित्यानन्द एव नित्यानन्दमभेदेनैव नमस्करोमि । अहो श्रूयतां भवद्भिः । मद्देवेनैव गुरुराजेन मां प्रतीदमुक्तं यत-स्त्वया स्वरूपस्थितेनैव तव तत्रैव विहारस्य व्याख्यानं कर्तव्यमिति । उत स्वयमेव मन्मिषेणैतद्विहरणं कुर्वतस्तस्य पादारविंदे मिलिंदायमानोऽहं तत्रैवाभेदेनैव स्थितोऽस्मि । एवं मां निमित्तीकृत्य मदीयेन

वचसा संतजनमानसानि संतोषयता श्रीगुरुनित्यानन्देनैवाहं संतवृंदेभ्योऽनेन व्याख्यानेन सह तस्यैव परीक्षणार्थं प्रेषितोऽस्मि। अपि तु यूयं स्वामिनो नित्यानन्दश्चैकरूपा एवेति मे निर्धारः। अत एव युष्माकमपि पादपद्मान्यहं नौमि। भोः स्वामिनः। अत्रैवानुभवामृते यत्कर्तव्यं प्रतीयते तत्तु समाधिरेव। अत्राधिकारिलक्षणं पुरैव प्रोक्तम्। तथापि पुनः किंचिद्वक्ष्यामि येन श्रीनित्यानन्द-स्वरूपं सम्यग् ज्ञास्यते। आदौ स्ववर्णाश्रमधर्मा यथासांगं संपादनीयाः। इहामुत्रभोगेषु वैराग्यं प्राप्य नित्यानित्यवस्तुविवेकश्चांगीकार्यः। स तु निर्वेदमनायासेनैव समुत्पाद्य जगतस्त्वनित्यतां प्रकटीकृत्य शुद्धवैराग्यं च जनयति। संजाते च शुद्धवैराग्ये सहजमेव तत्र शमदमादिकं स्यादेव। अनंतरं च श्रीगुरुं शरणं गमनाय पात्रता समुत्पद्यते। ततस्तनुमनोधनत्यागेनैव श्रीगुरोः पादार-विंदं सुदृढमाश्रयेत्। अत्र तु दृढविश्वासः सहायः कर्तव्यः। श्रद्धान्वितो भूत्वा श्रद्धावाँल्लभते ज्ञान-मित्यादिना दृढं निश्चित्य भावो हि फलजनको भवति सर्वत्रेति सर्वैर्ज्ञातम्। परमात्मैव निश्चयेन गुरुरत्राल्पोऽपि संदेहो न कर्तव्यः। वेदवाक्येष्वपि गुरोराज्ञैव वर्ततेऽत्र विश्वासः कार्यः। वेदशि-रोभागभूतोपनिषद्भागे सुदृढो विश्वासः संनिधीयेत। यतस्तत्र मूर्तिमती गुर्वाज्ञैव वर्तते। किं बहुना-ऽश्रुतपूर्वोऽपि वृत्तान्तो यदि श्रीगुरुमुखाच्छ्रवणपथमायातो भवति तर्हि स वेद इति विश्वासः कर्तव्यः। सद्गुरुर्हि वेदानां जनिता यस्य निश्वासमात्रेणैव वेदाः संभूताः सन्ति। अत एव ज्ञप्तिरूपेण तेऽपि सद्गुरुः। अतस्तैर्यदुक्तं तत्तत्सद्गुरुवाक्यम्। एवमुक्तप्रकारेण सद्गुरुस्वरूपं वेदस्वरूपं च सुदृढं विनिश्चित्य श्रीगुरुमुखाच्छ्रुतेन वाक्यानुसारेण वर्तमानस्य मुमुक्षोरेतद्भवपुरं गंधर्वनगरमिव मृषात्वमुपगम्य तत्रत्यास्त्रिविधतापाश्चोपशांता भवन्ति। एवं शांतसकलसंतापेन तेनैव

मुमुक्षुणा त्वंपदतत्पदलक्ष्यार्थस्य चिदैक्यताऽसिपदेनात्मन्यपरोक्षतां नीता । यदर्थं च प्रवृ-त्तावन्वयव्यतिरेकौ साफल्यं गत्वाऽग्निर्यथा हविर्भुक्त्वोपरमते तथोपरमं गतवन्तौ । येन चिति-प्रत्ययासिना पूर्वपक्षसिद्धांतादिविवर्तपरिणामादयश्च वादाश्छेदिताः स एवास्याधिकारी ज्ञातव्यः । पंचाभिरपि ज्ञानवृत्तिभिर्यदस्पृश्यमिति यत्स्वरूपमतो यस्यानुभवेन विनैवानुभवः सोत्र परीक्षणीयः । अपूर्णश्चेत् तर्ह्यचिरादेव पूर्णो भवति । एष एवात्र संबंधः । यतो यदत्रोक्तं तदेव वेदशिरोभागभूतो-पनिषद्भागेऽप्युक्तमेव । उपनिषत्तु वेदमथितार्थ एव । सैव श्रुतिरत्र प्रमाणं वर्तते । किमर्थमेतच्छ्रुति-प्रामाण्यमेवेति चेत्तर्हि चराचरं च तत्सर्वं व्याप्य नारायणः स्थित इति श्रुत्युक्तं नारायणस्य स्वरूपं तस्य यद्वचनं सैव श्रुतिरतस्तस्याः प्रामाण्यमुपयुक्तं वर्तते । तच्छ्रुतिवचनमेवानुभवामृतमिति ज्ञातव्यम् । अहो सकल एवोपनिषदर्थोऽस्मिन् ग्रन्थे ग्रथितोऽस्तीति श्रीज्ञानेश्वरेणैवास्य ग्रन्थावसाने निर्दिष्टम् । अत एव सर्वमतांतराधिष्ठितं युक्तिजालं त्यक्त्वेदममृतमेवाचम्येत । अस्य प्राशनमात्रेण प्राश्नुवानः पुमानमृतं भवति । किंवा ग्रन्थरूपेऽस्मिन् श्रीगुरुवचने स्वात्मानुभव एव निरीक्षणीयः । यद्यत्र काचिद् भिन्नतोपदृष्टा तर्हि तामभ्यासेनैव भित्त्वा तत्रस्थामेव नैसर्गिकीमभिन्नतामुपगृह्णी-यान्नाम श्रीगुरुवचनमात्मप्रतीतिं चैकवाक्यतां नीयात् । अत्र विवादः किंनिमित्तक इति चेत् । तर्हि सम्यगधिकाराभावाच्छ्रीगुरुवाक्यं मरुस्थले जलवृष्टिरिव सम्यक् कार्यलाभाय नार्हति । अतः श्रीगुरुमहिमा नाल्पमपि लघुतां गतः । किं तु सद्गुरुमाहिमानं वर्णयितुं प्रवृत्ता वागपि तत्कार्यं विहाय निवृत्तैव भवति । उक्तं च । यतो वाचो निवर्तन्तेऽप्राप्य मनसा सहेति । सद्गुरुकृपापूर्णत्वा—

भावादत्रत्यं गुह्यं किंचिदपि नो लभेत। अतोऽसौ ग्रन्थोऽननुगृहीतैर्जनैर्यथार्थं ज्ञातुं न शक्यते। प्रसादमात्रेणैव च त्रातुं समर्थाः सद्गुरवोऽतीव दुर्लभाः सन्ति। शब्दशास्त्रनिपुणाः सद्गुर्विति नामाभिधानेनैवात्मानं कृतकृत्यं मन्यमाना बहवः सन्ति। कथमेते समाधानाय प्रभवन्ति। अतो येऽनेनामृतेन संपन्नाः सन्ति तेषामेव वचनं निगमः। अस्तु। एतदेव वचनामृतं त्रिविधतापहारिणं निवृत्तिपथं संचरद्भिर्मुमुक्षुभिः सेव्यते। सेव्यमानगुरुपादपद्मैरपि साधकैरयं ग्रन्थः सावधानं परिशीलनीयः। अवधानं विनांतरं स्वारस्यं नोपलभ्यते। विवेकं सहायं कृत्वेमं ग्रन्थं विचारयन्तो मुमुक्षवोऽत्रत्यमखिलं गुह्यमाकलयितुं प्रभवन्ति। अहं त्वधुना ज्ञानाज्ञानं विहाय कल्पनातीते श्रीनित्यानन्दचरणसरोजे शांतोऽस्मि अतस्तेनैव वागुद्दीपिता अतः स्वानुभवप्लुतानि वचनान्युदीर्य सा मम स्वानन्दसुखं द्विगुणीकृतवत्यभूत्। अहो! अनंतोयममृतसिन्धुः। लघुतमं तु मे चंचुपुटम्। अतो यावदमृतं धारयितुं तत्समर्थं भवति तावदेव तु मम। शेषं तु निरवधितयाऽतीवाल्पतया च मे वाचोऽस्पृष्टमिव तिष्ठंति। अस्तु। अहं त्वस्य ग्रन्थस्य यथामति व्याख्यानं कर्तुं प्रवृत्तोऽस्मि। तज्ज्ञांस्तु सावधानं श्रोतुं विज्ञापयामि। अतस्तु संतचरणान्नत्वा स्मृत्वा च श्रीनित्यानन्दचरणकमलमेतद्ग्रंथविवरणमारभे। गंभीरार्थोऽयं ग्रंथः। तथापि ग्रंथावधानमिषेण मनःस्थैर्यार्थमहमिदं वक्तुमुद्यतोऽस्मि। अस्फुटान्यपि बालवचांसि श्रुत्वा पितरौ यथा संतुष्यतस्तथा यूयमपि संतजना मेऽल्पमेधसोऽपि वचनानि समाकर्ण्य क्षणमेकं संतुष्टा भवथ। एतद्ग्रंथारंभे श्लोकपंचकेन कृतस्य मंगलस्य व्याख्यानं प्रथमतः कुर्वे तच्छ्रोतव्यं भवद्भिः।

इति श्रीशिवकल्याणकृतयो

अमृतानुभवग्रन्थस्य प्रस्तावनावतरणयोः

संस्कृतभाषान्तरं समाप्तम् ।

---

हरिः ॐ तत्सत्

# अथ श्रीज्ञानेश्वरकृतामृतानुभवः ।



## संस्कृतभाषान्तरम् ।

### मङ्गलम् ।

यदक्षरमनाख्येयमानन्दमजमेकलम् ।
श्रीमन्निवृत्तिनाथेतिख्यातं दैवतमाश्रये ॥ १ ॥

टीका—सच्चिदानन्दपदवाच्यं तत्पदलक्ष्यार्थं च यत्पदं यतो वाचो निवर्तन्तेऽप्राप्यमनसा सहेति श्रुतिप्रतिपादितं क्षरत्वाभावादक्षरमित्युक्तं । यत्तुपिण्डसाक्षित्वेनैवोपाधिभेदेनैव कूटस्थमिति संज्ञितम् । तदेवान्यसत्ताभावात्केवलस्वसत्तामात्रेणैव स्वमहिम्नि विराजते । अविकारित्वात्तदेवा-क्षरमिति ज्ञातम् । कल्पनातीततयाऽनाख्येयमिति । परा हि शब्दजननी । तस्या अपि परत्वात्त-स्याख्या कथं भवेत् । नैव भवेत् । अहो ! आख्या हि शब्दसंभूता । यत्र शब्दस्यासंभवस्तत्राख्येति कथं भवेत् । अवाङ्मनसगोचरतया यतः श्रुतिरपि निवर्तते तस्याख्या केन करणीया । न केनापीति-भावः । अतो यच्छब्दवाच्यं तदनात्मतया तद्व्यतिरिक्तमेव । अहो ! शब्दत्वेनापि यत्स्वयमेव नाम शब्दाधिष्ठानत्वेन वर्तते । यतो यत्सत्तां विना शब्दोऽपि नोत्तिष्ठति । अतः शब्द एव निःश-

ब्दतां गतः । श्रुतिः । नायमात्माप्रवचनेन लभ्य इति । कठवल्लिः । अतस्तच्छब्दातीतं शुद्धं बुद्धं नित्यं सच्चिदानन्दरूपेण धर्मधर्मित्वभेदं विनैव राजते । अहो ! अत्रानंदैकरसे न किंचिद् द्वैतं समुपस्थितम् । यतोऽस्यानंदे नान्यः कश्चिदानन्दवान्भवति । वस्त्वंतराभावात् । दण्डग्रहणेन यथा पुरुषो दण्डीत्युच्यते । तद्वत् । अत्रानंदशब्दः स्वरूपतो न धर्मतः । अतः स एवानन्दोऽधर्मतया स्वतःसिद्धतया वाऽज इति विशेषणमर्हति । अथैतेन विशेषणेन विशिष्टं विशेष्यमजाततया कस्यापि विशेषणस्य विषयो न भवति । अतोऽज इति नामधेयमत्रैव शोभते । परिपूर्णतया नित्यतया चात्र स्वोत्पत्तिविकल्पो न कदापि स्फुरति । अतोऽज इति संज्ञाऽत्र समीचीना । अनादिमध्यांततया तु तदखण्डितमस्त्येकम् । तत्तु चिन्मात्रतयाऽऽद्यंतरहिततया च केवलाद्वैतरूपेणैव राजते । अहो ! एकमेवाद्वितीयत्वेनापि स्वलीलयाऽनेकत्वमाभासयत् सदाऽऽत्मनोऽद्वैतमविमुच्य स्वसंवेद्यत्वेन नाम स्वानुभवेनैव विलसति । प्रवृत्तिनिवृत्त्यादिकैर्द्वंद्वैरस्पृश्यमिति यदात्यंतिकं निवृत्तिपदं तदेतन्निवृत्तिनाथेति नाम्ना संज्ञितम् । सैषा संज्ञा स्वरूपतो न संबंधतः । अहो ! प्रत्यग्देवः कायिकवाचिकमानसिकप्रवृत्तेः परः । अतः सनिवृत्तिरपि नियंतृत्वेन वर्तते । ततस्तु निवृत्तिनाथेति संज्ञाऽन्वर्थकैव । यत्तु प्रवृत्तिनिवृत्त्योरधिष्ठानं तत्र सहजमेव निवृत्तिस्वामित्वं वर्तते । अतो निवृत्तिनाथेत्यभिधानं सार्थकतामुपगतम् । देशकालवस्तुपरिच्छेदरहिते वस्तुनि तदावरणाय न कोऽपि प्रभवति । वस्त्वंतराभावात् । नित्यापरोक्षतया यत्त्वनाख्येयं तदेव ख्यातिं गतम् । एवं निवृत्तिनाथेति संज्ञितं स्वरूपमस्माभिराश्रितमेव । यत्प्रसादात्स्वरूपभ्रांतिर्न भवति । यत्त्यागेनापि

त्यक्तं न भवति। यदेवाखिलस्य विश्वस्य मूलाधारमेव। अकृतका हि तत्र विश्वाश्रयता। सर्वाश्रयत्वं त्वेतदाश्रयकालेऽनाश्रयकाले वाऽभिन्नमेव। स्वतोभिन्नसत्ताभावात्। सुवर्णमेव यथाऽलँकारत्वेन शोभते नाम वस्त्वंतरेण विनैव यथा सुवर्णेऽलंकारप्रतीतिस्तद्वत्स्वरूपेऽखिलदृश्यवर्गस्यैव। परिपूर्णमेतच्चित्स्वरूपम्। तदेवाहमस्मि। त्यागोऽत्र न भवति। एवमाश्रयाश्रितस्यैकरूपतयाऽखण्डप्रत्ययस्वरूपो ह्यस्यानुभवः। तच्चास्माकं सर्वस्वं वर्तते। सैव गुर्वाज्ञा। शिवशक्तित्वेन तदेव शोभते॥

गुरुरित्याख्यया लोके साक्षाद्विद्या हि शांकरी।
जयत्याज्ञा नमस्तस्यै दयार्द्रायै निरंतरम्॥ २॥

गुरुः इति आख्यया। लोके हि इति निश्चयेन साक्षाद् इह आज्ञा शांकरी आज्ञा रूपेण शांकरी सर्वोत्कर्षेण वर्तते तस्यै दयार्द्रायै निरंतरम् नमः। अस्यार्थः। आनन्दो हि सद्गुरुस्वरूपम्। सद्गुरुर्हि शंकरः। यात्र चिद्रूपता सैव शांकरीत्युच्यते। सेयं चिद्गुरुरूपैव। अतः शंकरः शांकरी चैकरूपत्वेन शोभेते। अहो! स्वरूपे यत्स्वसंवेद्यत्वं वर्तते तदेव वेद्यवेदकत्वेन शिवशक्तिरूपेण शोभते। यज्ज्ञप्तिरूपेणाखिलं द्वंद्वजातं प्रकाशयाति तत्त्वभेदेनैव। अहो! अविभक्तमपि विभक्तमिव प्रतीयते। वेद्यवेदकभावरहितमपि वेद्यवेदकत्वमवभासयाति। अविकृतबोधस्वरूपमपि बोध्यबोधकतां प्रदर्शयाति। इत्येवाखिलं शंकरशांकरीस्वरूपम्। अतोऽखिलं सद्गुरुस्वरूपमेव। स्वसंवेद्येऽस्मिन् सद्गुरूस्वरूपे सद्रूपो ह्यखण्डैकरसः। यतस्तेनैव तस्य नमनं भवति। अभेदरूपेऽस्मिन्नमने न किमपि कर्तव्यं प्रतीयते। स्वाभाविकमेवैक्यमनपास्यात्मन्येवाऽऽत्मनोऽन्येन विना वेद्यवेदक-

त्वं भासयति। विवर्तस्वरूपोऽयं द्वैतभासोऽद्याप्यवभासते तथापि निसर्गसिद्धाद्वैतस्वरूपे वस्तुनि न किंचिदपि द्वैतं तेन समुत्पादितम्।

सार्धं केन च कस्यार्धं शिवयोः समरूपिणोः।
ज्ञातुं न शक्यते लग्नमिति द्वैतच्छलान्मुहुः ॥ ३ ॥

टीका—समरूपिणोः शिवयोः कस्य अर्धं केन सार्धं इति ज्ञातुं न शक्यते। इतिकारणात् मुहुः लग्नं द्वैतच्छलात्। अस्यार्थः। उपरिदर्शितशिवशक्तिरूपे यद् द्वैतावभासनं तत्प्रतीतिमात्रम्। न तु वास्तविकम्। अहो! स्वतःसिद्धमिदं स्वसंवेद्यत्वम्। यत्र केवलं निर्द्वंद्वं सुखं वर्तते तस्मिन् सुखस्वरूपे यत्सुखमात्रत्वं तेनैव तत्र द्वैतसमुद्भव इति प्राहुः। तथापि ; यथा कर्पूरे परिमलस्तथास्मिन् स्वरूपे द्वैतलीला। गुडे प्रतीयमानं गुडत्वं माधुर्यं चेति द्वंद्वं यथा नाममात्रं तथैव स्वरूपे स्वरूपानुभवः। अतस्तत्र नकोऽपि भेदो वर्तते यतोऽनुभविताऽनुभवश्चेति द्वंद्वमवास्तविकं भवति। अतस्तत्प्रतीयमानं द्वैतमद्वैतमेव। नन्वत्रानुभाव्यानुभवाविति द्वंद्वमेकरूपेण स्थास्यत इति चेन्न। निःसंशयेन प्रतीतिमात्रमिदं द्वैतं वस्तुतोऽद्वैतमेव। अहो! अनुभवानुभाव्ये इति द्वंद्वेन स्वरूपस्यैकतोपपाद्यत इति मन्येत चेत्तर्हि यत्रैतद् द्वैतं संमिलितं वर्तते तत्रैव संधिः प्रतीतिक्षमो भवेत्। किं त्वसौ न प्रतीयते। अतस्त्वेषा सार्धताऽर्धाऽर्धकल्पनाऽप्रशस्तैव। शकलद्वयेन घटिते पात्रे संधिर्यथा स्फुटं दृश्यते तथात्र न भवति। एतत्केवलं चिन्मात्रस्वरूपं वर्तते। तस्यात्मस्वरूपस्य निरीक्षणेऽपि निरीक्षणं न भवति। अतोऽस्मिन् दृङ्मात्रस्वरूपे कथं भेदः प्रतीयते। नैव खलु। अतस्तज्ज्ञानाज्ञाने विना एव

स्वयं ज्ञानस्वरूपेण राजते । अतः प्रातियोगिकमेकत्वमपि ग्रसित्वा स्वाभाविकमेकत्वमेव प्रकाशयति। यदि प्रपंचं निषिध्य वस्त्वभेदं साधयितुं कश्चिद्वाञ्छेत् तर्ह्यनयेच्छया तेन निसर्गसिद्धाभेदे वस्तुनि भेदः कल्पितः । अतो यत्र पूर्वमेवैक्यसिद्धिस्तत्राभेदजननार्थं कृतः श्रमो निष्फल एव । किंतु यत्र द्वैतबुद्धिर्दृश्यते तन्नाशार्थमेवास्य साफल्यम् । यस्तु द्वैतबुध्द्याः सापेक्षतयाऽभेदो वर्तते सत्वौपचारिक एव न तु वास्तविकः । अभेदमात्रमेव वस्तु । अत एवाभेदसिद्धयर्थं प्रयत्नस्य नैवोपयोगः । यत्तु कृतकं तदनित्यं घटवत् । अतः स्वसंवेद्यस्वरूपे भेदो नैवोत्पद्यते । अतस्तच्छंकरस्वरूपे न किंचिदपि न्यूनं समुत्पाद्य शांकरीरूपेणापि तदेव शोभते । एवं स्वरूपाभिमुखत्वे वा प्रपंचाभिमुखत्वे वा यत्पृथक्त्वं प्रतीयते तत्तु निरुपाधिकमेव । अतस्तदेव जगत्कारणं विद्यते । भेदाभेदविहीनं स्फुरणं तदेव प्रकृतिपुरुषाख्यया प्रसिद्धम् । तस्यैवोपरिस्थिताः प्रमात्रादयो भासाः । एतदेवाग्रे निरूपयति श्रीज्ञानेश्वरः । प्रकारांतरेण व्याख्यानं क्रियतेऽधुना । समरूपिणोः शिवयोर्मुहुर्लग्नं द्वैतच्छलाज्ज्ञातुं शक्यते । अस्यार्थः । पूर्वोक्तप्रकारेण शिवशक्तिरूपेणैकं स्वसंवेद्यवस्त्वेव । वेद्यवेदकप्रभावेण केवलवेदनस्वरूपं हि तद् । अतस्तत्र भेदलेशोऽपि न संभवति। स्वसंवेद्यत्वेन यो विलासो भवति स तु द्वैतनिमित्तक इति चेत्तर्ह्यनुभवस्वरूपभूते वस्तुनि वेद्यवेदकाभावात्तत्सापेक्षं वेदनमपि न संभवति । किन्त्वेकरसत्वात्तत्स्वतःसिद्धवेदनमात्रमेव । अतो यत्स्वभावेनैकं तत्रैक्यसाधनाय कस्य प्रयत्न उपयुक्तो भवति । न कस्यैव । अतः शिवशक्त्योः सँलग्नतया नाम परस्परास्वतंत्रतया द्वैतनिरासोऽतस्त्वैक्यसिद्धिरिति कल्पना भ्रममात्रैव । स्वतःसिद्धमेवैक्यम् । न तत्र कदापि द्वैतवार्ता श्रुता । अस्तु । प्रतीतेऽस्मिन् व्यष्टिसमष्टिसमुदाये केवलं

सच्चिदानन्दं स्वरूपमेव राजते नत्वन्यत् । असंख्यवृक्षसमूहे यथा वनकल्पना तथैवानंतकोटिब्रह्माण्डसमुदाये ब्रह्मकल्पनेति चेन्न । सच्चिदानन्दरूपेऽस्मिन् वस्तुनि भेदावकाशो नास्त्येव। शुद्धज्ञानविग्रहमिदं वस्तु ज्ञानोत्कर्षेण स्वसंवेद्यत्वेनैव वर्तते । एतदेव तु प्रकृतिपुरुषकल्पनाधिष्ठानम् । अतस्तदेव सद्गुरुस्वरूपम् । तत्रैव तत्स्वरूपेण गुर्वाज्ञा वर्तते । अतो न तत्र भेदकल्पनावकाशः । इतिकारणात्कस्यार्धं केन सार्धमिति न । अस्यार्थः स्वसंवेद्यस्वरूपे वेद्यवेदकभावो यदि स्यात् तर्हि स प्रतीतो भवेत् । यथा शकलद्वयेन घटिते पात्रे शकलद्वयं स्फुटं प्रतीयते । एतत्सदृशं न किंचित्स्वरूपे विद्यते । संधिप्रतीतेरभावात् । ननु भेदप्रतीतेरभावादभेदमात्रमेव वस्त्विति चेत्तर्हिदं द्वैतं कथं प्रतीयते । अस्याः शंकायाः समाधानमग्र एव स्फुटं कृतं तदवधारयन्तु भवन्तः ।

अद्वैतमात्मनस्तत्त्वं दर्शयन्तो मिथस्तराम् ।<br>
तौ वंदे जगतामाद्यौ तयोस्तत्त्वाभिपत्तये ॥ ४ ॥

अद्वैतस्वरूपेऽस्मिन्नात्मन्यभेदलेखामनुल्लंघ्य यद् द्वैतं भासते तत्त्ववास्तविकम् । किंवा तद् द्वैतभासेनाप्यद्वैतस्वरूपं वस्त्वेव । तत्र स्वरूपभूतैव या स्वसंवेद्यता वर्तते सैव वेद्यवेदकतां भासयित्वा जगद्रूपेण शोभते । दृश्यद्रष्टृधिष्ठानतया निरूपाधिकत्वेनोत सोपाधिकत्वेन स्वयमेव चितिर्वर्तते । अतः स्वस्वरूपभूतेऽस्मिन्नेकत्वे द्वैतं कदापि नोत्थितमेव । न च तद् वेद्यवेदकतामुपगतम् । नाममात्रेऽस्मिन् जगति तदेव विलसति । एवं स्वतःसिद्धं ह्येतद्वस्तु । अस्यैव चिद्विलासोयं येनाद्वैतेऽस्मिन् विविधता प्रतीयते । स्मृतिरपि । अत्र कारणमद्वैतं शुद्धचैतन्यमेव हि । तेन नापेक्ष्यते ह्यन्य-

त्कारणमचेतनात्मकम् ॥ १ ॥ अस्य जगदाभासस्य कारणं शुद्धचैतन्यमेव । न तत्स्वात्मसिद्धये कारणांतरमपेक्षते । स्वतःसिद्धतया कारणांतराभावाच्चिदेव विलसति । श्लोकः । चिदेव पंच भूतानि चिदेव भुवनत्रयम् । एवं ज्ञात्वाधुना सम्यगहमेव चिदेव हि ॥ १ ॥ अस्यार्थः । स्वरूपचैतन्यमेव भूतपंचकत्वेन विलसति । तत्कार्यं भुवनत्रयमपि चिदेव । अहमपि चिदेवेति मयाऽधुना ज्ञातम् । स्वतःसिद्धस्वसंवेद्यत्वेनाहमेव । जगदपि स्फुरणादेव प्रतीयते ॥ श्लोकः ॥ चैतन्यस्यैकरूपत्वाद्भेदो युक्तो न कर्हिचित् । जीवत्वं च मृषा ज्ञेयं रज्जौ सर्पग्रहो यथा ॥ १ ॥ टीका ॥ चैतन्यस्य सर्वभूतभौतिकप्रपंचाधिष्ठानप्रकाशस्य घटः प्रकाशते पटः प्रकाशते इत्यादिष्वेकरूपत्वादेकाकारत्वाद्धेतोः कर्हिचित् कस्यांचिदवस्थायामपि भेदो न युक्तो न यथार्थ इत्यर्थः । तर्हि जीवभेदः सत्यः स्यादित्यत आह । जीवत्वमिति । चकारोप्यर्थः । मृषा मिथ्या ज्ञेयम् । तदुपाधेरेवांतःकरणादेर्मायामयत्वादित्यर्थः । अधिष्ठानसत्यत्वेन कल्पितस्य मिथ्यात्वबोधे दृष्टांतमाह रज्जाविति । यथा रज्जौ तदज्ञानाद् वक्रतादिसादृश्येन मंदांधकारे सर्पग्रहः सर्पबुद्धिरव्युत्पन्नस्य भवति नतु व्युत्पन्नस्य । तथैवात्मन्यात्माज्ञानात् प्रकाशसादृश्यादविशेषप्रकाशे चिज्जडग्रन्थिरूपचिदाभासभ्रमो भवत्यविवेकिनां न तु विवेकिनामिति वेदांतसिद्धांतरहस्यम् । श्लोकः । रज्ज्वज्ञानात्क्षणेनैव यद्वद्रज्जुर्हि सर्पिणी । भाति तद्वच्चितिः साक्षाद्विश्वाकारेण केवला ॥ २ ॥ इदानीं पूर्वोक्तमेव दृष्टांतं विवृण्वन् सर्वस्यापि प्रपंचस्य ब्रह्मरूपतामाह । रज्ज्विति केवलेति विशेषणेन पूर्वावस्थामपरित्यज्यावस्थांतरप्राप्तिलक्षणविवर्तोपादानत्वमेवोक्तम् । नारंभोपादानत्वं नापि परिणामोपादानत्वमिति बोध्यम् । अन्यत्स्पष्टम् । श्लोकः ॥ उपादानं प्रपंचस्य ब्रह्मणोन्यन्न विद्यते । तस्मात्सर्वप्रपंचोऽयं ब्रह्मै-

वास्ति न चेतरत् ॥ ३ ॥ व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात् । इति ज्ञाते परे तत्त्वे भेदस्यावसरः कुतः ॥ ४ ॥ अत्र हेतुं दर्शयन् पूर्वोक्तमुपसंहराति । उपादानमिति । यस्मात्प्रपंचस्याकाशादिदेहांतस्य जगद्विस्तारस्य ब्रह्मणो मायाशबलाच्चैतन्यादन्यत्परमाणवो यद्वा प्रकृतिरुपादानं कारणविशेषो न विद्यत इति । तस्माद्वा एतस्माद् आत्मन आकाशः संभूत इत्यादि श्रुतेः । तस्माद्धेतोरिरिति । स्पष्टमन्यत् । ननु व्याप्यव्यापकतारूपे भेदे जाग्रति सति कथं प्रपंचस्य ब्रह्मतेत्याशंक्याह । व्याप्येति । व्याप्यमांतरं व्यापकं बाह्यं तयोर्भावो मिथ्या घटाकाशादिवत् । कल्पितत्वादसदित्यर्थः । अतः प्रमाणमाह । सर्वमिति । इदं ब्रह्म इदं क्षत्रमिति प्रकृत्येदं सर्वं यदयमात्मेत्यादिश्रुतिरूपेश्वराज्ञाबलादित्यर्थः । ततः किमत आहेतीति । इति ज्ञात इत्यादि सुगमम् । श्लोकः । श्रुत्या निवारितं नूनं नानात्वं स्वमुखेन हि । कथं भासो भवेदन्यः स्थिते च द्वयकारणे ॥५॥ ननु प्रत्यक्षेण भासमानो व्याप्यव्यापकभावः कथं मिथ्येत्याशंक्याह श्रुत्येति नूनमिति निश्चये हीति प्रसिद्धौ । श्रुत्या नेहनानास्ति किंचनेत्यादिरूपया नानात्वं निवारितम् । तेन च नानात्वनिवारणेनाद्वयकारणेऽभिन्ननिमित्तोपादाने ब्रह्मणि स्थिते सति भासो व्याप्यव्यापकतादिप्रतिभासः कार्यभूतोऽन्यः स्वकारणातिरिक्तः कथं भवेत् । न कथंचिदित्यर्थः । श्लोकः । ब्रह्मणः सर्वभूतानि जायन्ते परमात्मनः । तस्मादेतानि ब्रह्मैव भवन्तीत्यवधारयेत् ॥ ६ ॥ तर्हि किं कुर्यादित्यत आह ब्रह्मण इति बृहत्वादपरिच्छिन्नत्वाद्ब्रह्मतद्रूपात्परमात्मनः सर्वाणि भूतानि जायन्ते उत्पद्यन्ते । जायन्त इति स्थितिप्रलयोरप्युपलक्षणम् । यतो वा इमानि भूतानि जायन्त इत्यादिश्रुतेः । यस्मादेवं तस्माद्धेतोरेतानि भूतानि ब्रह्मैव भवन्ति । सन्मात्रब्रह्मरूपाणीत्यवधारयेन्निश्चिनुयादिति । श्लोकः । ब्रह्मैव सर्वनामानि रूपाणि विविधानि च ।

कर्माण्यपि समग्राणि बिभर्तीति श्रुतिर्जगौ ॥ ७ ॥ ननु नानानामरूपकर्मभेदेन विचित्राणि भूतानि कथं ब्रह्मात्मकानीत्याशंक्याह ब्रह्मैवेति । त्रयं वा इदं नामरूपकर्मेति बृहदारण्यकश्रुतिर्जगौ । गायनं कृतवती । स्वाधिकारिणः श्रावयामासेत्यर्थः । किमित्यत आह ब्रह्मैव । सर्वनामान्याकाशादिदेहांतान् संज्ञाविशेषान् । च पुनर्विविधानि रूपाण्यवकाशादिद्विपदांतान् । नानाविकार-विशेषान् । अपिशब्दश्चार्थे । रूपग्रहणं गंधादिग्रहणस्याप्युपलक्षणम् । समग्राणि कर्माणि अवकाश-प्रदानादीनि स्नानशौचादीन् क्रियाविशेषानपि बिभर्ति । रज्ज्वादिकमिव सर्पादि प्रतिभासं दधात्यधिष्ठानदर्शनशून्यान् प्रति दर्शयतीत्यर्थः । श्लोकः । सुवर्णाज्जायमानस्य सुवर्णत्वं च शाश्वतम् । ब्रह्मणो जायमानस्य ब्रह्मत्वं च तथा भवेत् ॥ ८ ॥ अत्र लोके प्रसिद्धं दृष्टांतमाह सुवर्णेति सुगमम् । श्लोकः । अयमात्मा हि ब्रह्मैव सर्वात्मकतया स्थितः । इति निर्धारितं श्रुत्या बृहदारण्यसंस्थया ॥ ९ ॥ अनुभूतोप्ययं लोको व्यवहारक्षमोऽपि सन् । असद्रूपो यथा स्वप्न उत्तर-क्षणबाधतः ॥ १० ॥ स्वप्नो जागरणेऽलीकः स्वप्नेऽपि जागरो न हि । द्वयमेव लये नास्ति लयोऽपि ह्युभयोर्न च ॥ ११ ॥ शोककारणद्वैताभावे प्रमाणमाह अयमिति । स वा अयमात्मा ब्रह्म विज्ञान-मय इत्यादिरूप इत्यर्थः । शेषं स्पष्टम् । नन्वयं लोक एव तत्कारणे सति कथं शोकाद्यभाव उच्यत इत्याशंक्य सदृष्टांतमाह अनुभूत इति स्पष्टम् । दृष्टांतं विवृण्वन्नुक्तन्यायमन्यत्राप्यतिदिशति स्वप्न इति । अलीको मिथ्या द्वयं स्वप्नजागरणे । लये सुषुप्तौ । शेषं स्पष्टम् । श्लोकाः । त्रयमेवं भवेन्मिथ्या गुणत्रयविनिर्मितम् । अस्य द्रष्टा गुणातीतो नित्यो ह्येकश्चिदात्मकः ॥ १२ ॥ यद्वन्मृदि घटभ्रांतिं शुक्तौ वा रजतस्थितिम् । तद्वद् ब्रह्मणि जीवत्वं वीक्ष्यमाणे न पश्यति ॥१३॥ यथा मृदि घटो नाम

कनके कुंडलाभिधा । शुक्तौ हि रजतख्यातिर्जीवशब्दस्तथा परे ॥ १४ ॥ उक्तमुपसंहरन् फलितमाह त्रयमिति । त्रयम् जाग्रदाद्यवस्थात्रयमेवमुक्तपरस्परव्यभिचारेण मिथ्या । मिथ्यात्वे हेतुर्गुणेति । गुणत्रयविनिर्मितं मायाकल्पितमित्यर्थः । तर्हि किं सत्यमत आहास्येति । अस्य अवस्थात्रयस्य । शेषं स्पष्टम् । नन्ववस्थात्रयं मिथ्या भवतु । जीवस्तु सत्यः स्यादित्याशंक्य सदृष्टांतमुत्तरमाह । यद्वदिति । ब्रह्मणि वीक्ष्यमाणे आत्मत्वेन साक्षात्कृते सति । जीवत्वं न पश्यतीत्यन्वयः । अन्यत्स्पष्टमेव । अज्ञानावस्थायां प्रतीयमानो यो जीवब्रह्मभेदः स नाममात्र इति बहुदृष्टान्तैराह । यथेति रजतस्य ख्यातिराख्या नामेति यावत् परे ब्रह्मणि जीवशब्दस्तथा । शेषं स्पष्टम् । श्लोकौ । यथैव व्योम्नि नीलत्वं यथा नीरं मरुस्थले । पुरुषत्वं यथा स्थाणौ तद्वद्विश्वं चिदात्मनि ॥ १५ ॥ यथैव शून्ये वैतालो गंधर्वाणां पुरं यथा । यथाकारो द्विचंद्रत्वं तद्वत्सत्ये जगत्स्थितिः ॥ १६ ॥ न केवलं जीव एव नाममात्रः किंतु सर्वं विश्वमपि ब्रह्मणि नाममात्रमित्यनेकदृष्टांतैराह । येथैवेति स्पष्टम् । नाममात्रप्रपंचस्य मिथ्यात्ववासनादार्ढ्यायेममेवार्थं बहुभिर्लोकप्रसिद्धदृष्टांतैः प्रपंचयति । यथैव शून्य इत्यादिद्वाभ्यां शून्ये निर्जने देशे वैतालः अकस्मादाभासमानो भूतविशेषः । स्पष्टमन्यत् । एवमुक्तप्रकारेण श्रीमत्पूज्यपादैरप्युपपादितमन्वयव्यतिरेकेण चिन्मात्रवस्त्वेव । नत्वन्यत् । अत एव नम्यनमकभावेनापि तदेव । अतो भवान् यथा स्यात्तथा भवते भवतो वंदनमस्त्वेव । अत एव भवानेव मध्ये भवानेवांते भवानेवादौ । इदमेवैतद् नत्वन्यत् । एवं वक्ष्यमाणश्लोकस्य संगतिं प्रदर्शयामः ।

मूलायाग्राय मध्याय मूलमध्याग्रमूर्तये ।
क्षीणाग्रमूलमध्याय नमः पूर्णाय शंभवे ॥ ५ ॥

अन्वयः । मूलाय नमः । अग्राय नमः । मध्याय नमः मूलमध्याग्रमूर्तये नमः । क्षीणाग्रमूलमध्याय नमः । अस्यार्थः । अहो ! यद्विश्वमूलत्वेन वर्तते यस्यैतन्नामरूपात्मकं विश्वं प्रकाशितं स एष परिपूर्णस्वरूपचिद्घन एव विश्वमूलत्वेन वर्तते । तस्यैव तेन वंदनं भवति । तत्र मूले यद्यवलोकनं भवति तर्हि तेनावलोकनेन तद्विषये न किमपि विश्वं भवति । तस्मै विश्वमूलस्वरूपाय मूलत्वेनैव नमो नमः तदनंतरं तस्य मूलस्यैव यो विश्वविलासो वर्तते तेन मध्यभूतेन विश्वविलासेन स एव जगन्निवासश्चित्तस्फुरणया सुष्ठुप्रकारेण शोभते एव। तत्पश्चात् तस्य विश्वाधारस्येश्वरस्य सर्वतः पाणिपादस्य चरणारविंदे मौलिसमर्पणेन तेनैव तस्मै नमो नमः । अहो ! तस्यैव सहस्रशिर्रांसि वर्तन्ते । सहस्रपादा वर्तन्ते । एवं वंद्यवंदनभावे न कोऽप्यवकाशो दृश्यते । तत्र स्मृतिः श्लोकौ । यथा यथावभासो यः शिव एवेति पश्यति । तथा तथा महाभावं भजते यत्नतस्तु सः ॥ १ ॥ यथा यथा मथा पुंसः स्वयमेव व्यवस्थिता । तथा तथानुसंधानं स्वभावेनैव पूजनम् ॥ २ ॥ इतिब्रह्मगीतायाम् । एतन्नामरूपात्मकं यद् भासते तत्सर्वं शिव एव पूर्णत्वेन वर्तते । एतद् गुह्यं यस्यापरोक्षरूपेण प्रतीयते तस्य पुरुषस्य यत्नं विनैव शिवपूजनं भवति । उत यद्यदेव तस्याचरणं वर्तते तत्सर्वमात्मरूपमेव नत्वन्यत् । एतदेवानुसंधानम् । अत एव तस्य स्वभावेनैव येन केन प्रकारेण शिवपूजनं भवेदेव । एवं पूर्वोक्तप्रकारेण विश्वरूपेणापि स्वयमेव विराजते । अत एव तस्मै तेनैव नमो नमः । अहो ! यदध्यासमूलत्वेन वर्तते तत्रारोपस्य कोऽपि स्पर्शो न भवति । कुतः । तदारोपत्वेनापि स्वयमेव वर्तते । अत एव कुतः स्पर्शकारणत्वम् । न किमपीत्यर्थः । अहो । यच्चैतन्यस्वरूपमाधारत्वेन वर्तते तदेव निषेधावधित्वेनैव । एष विनोदोऽपि मूलाधार एव ।

एवं पूर्वोक्तप्रकारेण यदधिष्ठानत्वेन वर्तते आरोपितत्वेनाऽपि तदेव । आरोपनिषेधेनापि तदेव । तस्मै चिन्मात्रभूतस्फुरणाय तेनैव नमो नमः । अहो ! यत्रारोपितकालेऽपि एतदारोपितं विश्वं न संभवति । अतस्तस्याधारस्योतारोपस्य तन्निषेधावधिभूतस्यैतत्त्रयमप्येकत्रैवानुभूतं तेन तस्मै नमो नमः । यत्र तस्मै तेनैव नमनं भवति तत्र नम्यनमनमपि नास्त्येव । तस्य चिन्मात्रस्वरूपस्य स्वस्याभावः केनापि नावलोकितः । एवं पूर्वोक्तप्रकारेण यन्निरूपितं गुरुकृपया तत्स्वानुभवेन स्वरूपसाक्षात्कारेणैव वर्तते । यतः स्वरूपस्यान्यथाभावो न भवति कालत्रयाबाध्यत्वेन । दृङ्मात्रत्वेन दृष्टृत्वेन पूर्णत्वेन स्वरूपेणैव विलसति । नत्वन्यत् किमपि वर्तते । अत्राधारारोपनिषेधकत्वेनैकस्यैवैतच्चित्रं चित्रं वर्तते । उतैतच्चित्राभावेऽपि चिन्मात्रवस्त्वेव पूर्णत्वेन शोभते । अत्र नम्यनमकत्वेन न द्वितीयोऽस्ति कश्चन । अहो ! एतस्मिन् स्वरूपभूते वस्तुनि कुतो मूलमध्याग्रत्वं वर्तते । न किमपीत्यर्थः । अत एव मूलमध्याग्रं क्षीणत्वेन वर्तत एव । एतदेव रहस्यं । एतद्यद् द्रष्टृत्वेन दृङ्मात्रत्वेन वर्तते तेन तस्मायेव नमो नमः । यतः स्वानुभवोऽपि स्वरूपेण नानुभावितुं शक्यः । अनुभवाभावेपि तस्याभावो न भवति । अतः पूर्णत्वेन शंकरायास्तु नमो नमः । अहो यदि पूर्णत्वेन शिव एव वर्तते तर्हि नमनमपि न द्वितीयम् । किंतु तदेव तत् । यथा महाप्रलयकाले पूर्णत्वेनांबुमात्रं वर्तते । तत्र न कोऽपि विभागो भवति । एतदुक्तं भवति । श्लोकः । किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् । आत्मना पूरितं सर्वं महाकल्पांबुना यथा ॥ १ ॥ यथा कल्पांबुनि पूर्णे सति न तत्र विभागो दृश्यते । तेन तत्पूर्णमेव भवति । तथैवाद्वैतरूपेण शिवस्य कथं नम्यनमकभावो वर्तते । न कोऽपि । पूर्णानन्दस्वरूपत्वादेव पूर्णाद्वयानन्दस्य न कापि क्षतिर्भ-

वतीति । अत एव तेनैव तस्मै नमो नमः । किंबहुनोक्तेन । प्रत्ययस्वरूपः प्रत्ययरूपेणैव पूर्वोक्त-प्रकारेणाधाराधेयनिषेधावधित्वेन विनैव तेन तस्मै नमो नमः । तस्मात्कारणात् केनापि प्रकारेण कुत्रापि तस्य स्वरूपाविलक्षणत्वं न भवत्येव । अत एव गुरोः स्वरूपमानंदमूर्त्यानंदरूपेण विराजते । तत्र स्थितिभेदो न वर्तते । कुतो निर्विकारत्वेन कूटस्थत्वेन कालत्रयेऽपि निर्विकारत्वं वर्तते । अत एव तेन तस्मै नमो नमः । एवं पूर्वोक्तप्रकारेण श्लोकार्थविवरणं भवति । नित्यानंदगुरोः प्रसादादेव मम धिया अनुरूपेण । अहो ! यथा सवितुर्निमित्तं कृत्वा या या जनानां चेष्टा वर्तते तत्र रविप्रकाशो यथा न लिंपत्येव । श्रुतिः । श्लोकः । सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतांतरात्मा न लिप्यते लोकदुःखैश्च बाह्यैः ॥ १॥ इति ॥ अत एव श्रीगुरोर्नित्यानंदस्य कृपयैष यो वाग्व्यापारो भवति तत्र यन्न्यूनत्वं पूर्णत्वं वा वर्तते तत्तु मदीयमेव । श्रीनित्यानन्दगुरु-घनविपुलवृष्ट्या तत्कल्पनाया अवकाशोऽपि नास्त्येव । अत एव वाग्व्यापारो न भवति । तत्र पूर्वोक्तिरपि तथैव । अधुना तस्य श्लोकस्यार्थोऽतीव गंभीरो वर्तते । अस्य सविलासमपि विवरणं कृतं चेत् तर्ह्यत्रैव ग्रंथसमाप्तिर्भवेत् । अत्रैव समाप्तिश्चेत्तर्ह्यग्रे श्रीमज्ज्ञानानन्दस्वामिना स्वयमेव चतु-रुत्तराष्टशतैरेतस्य पूर्वोक्तश्लोकपंचकस्य विवरणं क्रियते । मरुभूमौ प्रतप्तस्यातीव तृषितस्यात एव त्रस्तस्य जनसमूहस्य कृपाघनेनातीव विपुलत्वेनामृतवृष्टिः कृतैव । एष ज्ञानानंदः स्वामी । ज्ञानेनैव सर्वानानंदयतीति ज्ञानानन्दः । स ज्ञानविग्रहेणैव वर्तते । अत एव ज्ञानानन्दस्य तस्य ज्ञानानन्द इति यन्नामधेयं तच्छोभत एव । तेन ज्ञानानन्दगुरुवर्येण चतुरुत्तराष्टशतानुष्टुप्छंदैर्यन्मूलग्रन्थेन गुह्यतत्त्वं निरूपितं तत्र यद् व्याख्यानं वर्तते तत्तु नित्यानन्दगुरुप्रसादेनैव न तु स्वशक्तितः ।

तेन गुरुप्रसादेनैतद्विश्वं सर्वमपि शिवरूपेण वर्तते । तदेव कल्याणं न त्वन्यत् । अधुना शिवकल्याणस्तु कल्लोलतुल्यो वर्तते । तस्मिन् शिवकल्याणरूपकल्लोले नित्यानन्दगुरुरेव जलत्वेन वर्तते । तत्तु सज्जनानां समूह एव स्वदृष्ट्यावलोकयितुं समर्थः । तदवलोकनमपि दयालुत्वेनैव । नत्वनुज्ञातः । तस्यैतत्सच्चिदानन्दत्वेन सौष्ठवं वर्तते । तत्रास्मत्प्रीतिमस्तकं स्थिरीभवतु । येनाहमेव सच्चिदानन्दत्वेन तिष्ठामीत्यर्थः । श्रीअनुभवामृतनामधेयग्रंथस्य श्लोकपंचकस्य यद्विवरणं नित्यानन्दसूनुना कृतं तद्यथामति समाप्यते ॥

हरिः ॐ तत्सत् ।

इति मङ्गलं समाप्तम् ।

## ॥ अथ प्रथमप्रकरणमारभ्यते ॥

### ॥ ॐ नमो भगवते वासुदेवाय ॥

अधुना श्रीनित्यानन्दगुरुचरणकमलस्मरणानंतरमेतदनुष्टुभो विवरणं क्रियते मया । एतद्विवरणश्रवणेन श्रीगुरुरानंदभरो भवति ।

ईदृगुपाधिहीनं यज्जगतः कारणं स्वयम् ।
तद्वंदितं मयादौ च शिवशक्त्यादिनामकम् ॥ १ ॥

पदच्छेदः—ईदृग् उपाधिहीनं यत् जगतः कारणं स्वयम् । तत् वंदितं मया आदौ च शिवशक्त्यादिनामकम् ।

पदार्थसहितोऽन्वयः । ईदृक् ( श्लोकपंचकेनोक्तम् ) उपाधिहीनं ( निरपेक्षं ) यत् ( ब्रह्म ) शिवशक्त्यादिनामकम् ( शिवः शक्तिः पुरुषः प्रकृतिः इत्यादिनामभिः प्रसिद्धम् ) जगतः ( नामरूपात्मकप्रपंचस्य ) स्वयं कारणं ( अभिन्ननिमित्तोपादानत्वेन कारणम् ) मया आदौ च तद्वंदितं ( मया ज्ञानाधिराजेन ग्रंथारंभे स्वात्मानुसंधानेनैव नत्वन्यप्रकारेणेति ) ।

विवरणम्—पूर्वोक्तश्लोकार्थानुसंधानेनैकार्थत्वेन स्वरूपस्फुरणत्वेन द्विवचनं प्रतीयते । शिवशक्ती जगत्कारणत्वेन वर्तेते । उपाधिस्वीकारेण विनैव । अतःकारणादेतदेव ग्रंथस्यादौ मया वंदितम् । अत्र पूर्वोक्तार्थे विरोधः प्रतीयत एव । कथं चेत्तर्हि श्रूयताम् । पुरा भवद्भिरेक एवार्थो

निरुपितस्तत्र द्विवचनं किमर्थं । कारणत्वे सति निरुपाधिकमपि कथं। निरुपाधिकत्वेऽपि वंद्यवंदकत्वमपि कथम् । एतत्सर्वं भवद्भिर्विचारणीयमेव । एतच्चूक्तं पुरा भवद्भिर्यन्निरुपाधित्वेऽपि मयाऽऽदौ तद्वंदितं परं चैतत्त्वघटितमेव दृश्यते । निरुपाधिकत्वेन कथं वंदनं संघटत इत्याक्षेपः। एतत्सर्वं गुरुपादकंजस्मरणेन विचारपथेनावलोकनीयमेव । गुरुकृपयैव सर्वं सुभाषितं भवेदेव। आदौ तयोः प्रकृतिपुरुषयोः स्वरूपस्य किं लक्षणं किं च प्रमाणं तद्विचारणीयम् । अनेन विचारपथेनैवैतस्याक्षेपस्य निवृत्तिः सुकरा भवेत् । यत्तु शुद्धं दृङ्मात्रस्वरूपं सच्चिदानन्दात्मकं परिपूर्णं स्वयं नित्योपलब्धत्वेन वर्तते। एतयोर्यदभेदवर्तनं भवति स एवानंदः। सच्चिदानंदादिपदत्रयं स्वरूपेणैकमेव वर्तते । यत्तु नित्यत्वेन प्रकाशते तत्तु सत्यज्ञानत्वेनाभेदेनैव वर्तते। एतदेव प्रकृतिपुरुषत्वेन कथ्यते। ज्ञानं ज्ञानत्वेन विनैव न स्थातुमर्हति। अतः सत्ताभेदो न जायते । अन्योन्यं प्रति यत्प्रियत्वं वर्तते स एवानंदः। यत्सत्त्वं सत्त्वेनैवास्ति तत्तु ज्ञानबलेनैव। यत्तु स्वरूपसुखं तत्तु स्वरूपेणैव नत्वन्येन । यथा शुभ्रत्वं द्रवत्वं मधुरत्वं च दुग्धरूपेणैव वर्तते तथा सच्चिदानन्दत्वेन स्वरूपमेव वर्तते । एतत्पदत्रयं त्वौपचारिकमेव स्वरूपेण भेदाभावात् । स्वसुखानुभवस्तु स्वसंवेद्य एव। स्वरूपे यत्स्वसंवेद्यत्वं वर्तते तदेव कर्तृकर्तृत्वं, ज्ञातृज्ञातृत्वं, प्राप्यप्रापकत्वं। एतदेव प्रकृतिपुरुषत्वं न त्वन्यत् । यतो भोक्तैव भोक्तृत्वेन वर्तते ततो भोक्तृत्वं प्रतीयते । एतदेव प्रकृतिपुरुषत्वं नैवान्यत् । यथाऽब्धिरेव कल्लोलत्वेन वर्तते स्वयमेव कल्लोलादिना शोभते तथा स्वसंवेद्यत्वेन स्वयमेव राजते। अस्तु । स्वस्य सद्भावेनैवाव्यक्तस्वरूपेणापि स्वरूपमेव स्वस्मिन् भोग्यभोक्तृत्वादिव्यक्तित्वमपि भासयते। यज्ज्ञानं वर्तते तत्तु स्वेनैव । एतदेव प्रकृतिपुरुषत्वेन

शोभते । अत्र भेदाभावेऽपि स्वस्वरूपानुभवेन स्वरूपमेव प्रकृतिपुरुषसंज्ञां धत्ते । एवं पूर्वोक्तप्रकारेण स्वरूपैकत्वसद्भावेऽपि यद्रूपद्वयेन भासनं भवति तदेव जगत्त्वेन प्रतीयते । अत्र यत्सत्तास्वरूपं वर्तते तदेव पुरुषत्वेनोच्यते । स्वरूपे यज्ज्ञानत्वेन शोभनं भवति सैव प्रकृतिरिति कथ्यते । स्वस्वरूपे स्वसंवेद्यत्वं वर्तते । एकस्मिन्नपि वाक्यद्वयं प्रतीयते । अतःकारणान्निरुपाधिकत्वेऽपि जगद्धेतुत्वं वर्तते । एकस्य यदेकत्वेन गणनं तत्तु द्वितीयसापेक्षमेव । एतदेव जगत्कल्पनास्थलं वर्तते । स्वं प्रति स्वस्यावलोकनेन विषयविषयित्वं स्वस्यैव भवति । एष एव जगत्पथो न त्वन्यः । स्वस्याभावं विनैव यत्स्वस्मिन् भोग्यभोक्तृत्वं प्रतीयते तदेव ज्ञातृज्ञेयत्वं । एतद्दृश्यरूपेणापि द्रष्टैव वर्तते । अतः स्वरूपेणैव ज्ञातृज्ञेयत्वं भोक्तृभोग्यत्वं । अत उपाधिसंबंधेन विनैव स्वयमेवोपाधिरूपेण वर्तते । अत्र उपाधिशब्देन पुरुषप्रकृतीति नाममात्रं विवक्षितम् । स्वरूपतो विकाराभावेऽपि दृश्यत्वेन राजते । अधुनोपाधौ प्रतीयमानेऽपि निरुपाधिकत्वं न विहन्येत । अत्र ज्ञातृज्ञानत्वेऽपि भेदाभावः । अत्र युष्मदस्मदादि विनैव या स्थितिर्वर्तते तदेव वंदनं भवेत् । शिवो भूत्वा शिवं यजेदित्येषोक्तिरपि अस्यार्थस्य द्योतका । स्वस्य स्वानुभूतिरित्युक्तौ भेदः प्रतीयते । अत्र या भेदप्रतीतिर्वर्तते सा तु सत्स्फुरणेनैव न त्वन्येन हेतुना । एवं पूर्वोक्तप्रकारेणैतदेव जगत्कारणत्वेनानुभूयते । अत एव तेन रूपेण वंदनमपि भवत्येव । एनमर्थमग्रेऽपि विस्तरेण निरूपयामः ।

शिवो हि शक्तिरूपेण वृत्तः स्वप्रीतिमात्रतः ।
एकः सत्स्फूर्तिरूपाभ्यां स्वात्मन्येव विराजते ॥ २ ॥

पदच्छेदः—शिवः हि शक्तिरूपेण वृत्तः स्वप्रीतिमात्रतः । एकः सत्स्फूर्तिरूपाभ्यां स्वात्मनि एव विराजते ।

पदार्थसहितोन्वयः—हि ( यस्मात्कारणात् ) शिवः ( सद्रूपः परमात्मा ) स्वप्रीतिमात्रतः ( केवलमात्मनः स्वतंत्रयेच्छया ) शक्तिरूपेण ( चिद्रूपेण ) वृत्तः ( स्फुरद्रूपो भूतः इति यावत् तस्मात् ) एकः ( द्वैतभावविरहितः परमात्मा ) सत्स्फूर्तिरूपाभ्यां ( सद्रूपेण चिद्रूपेण च ) स्वात्मनि ( स्वमहिम्नि ) एव ( निश्चयेन ) विराजते ( प्रकाशते ) ॥ २ ॥

विवरणम्—सदेव चित्त्वेन वर्तते स्वप्रीतिमात्रात् । यतः स्वरूपेण न भेदोऽस्ति । तत्त्वेकमेव वर्तते । सत्त्वं यदि रोचते तर्हि तत् स्वरूपभाक् । सत्यत्वेन ज्ञानमेव । ज्ञानं सन्मात्रमुच्यते । अतः कारणात् सत्स्वरूपे विचारिते सति तस्य ज्ञानान् न कोऽपि भेदः प्रतीयते । तथा ज्ञानस्यापि विचारणे सत्तायास्तस्य भेदो न प्रवर्तते । अभेदेऽपि भेदप्रतीतिः केवलं स्वप्रीतिमात्रतः । आनंदस्य विचारेण द्वयमपि तत्र न प्रतीयते ! प्रीतिमात्रस्वरूपत्वात् । आनंदस्यापि सत्स्फुरणाभ्यां भेदो न विद्यते । यथा कर्पूरखण्डे निर्मलत्वं मकरंदो मृदुत्वं वर्तन्ते तत्र न भेदप्रतीतिर्दृश्यते तथैवात्रापि ज्ञेयम् । मृदुत्वेन कर्पूरखण्डग्रहणे सति मकरंदोऽपि तत्रैव वर्तते । यदि मकरंदग्रहणेच्छा भवति तर्हि तत्रैव मृदुत्वं विद्यते । तथैव सत्स्वरूपे विचारिते सति तत्रैव ज्ञानं वर्तते । ज्ञानमात्रे विचारिते सति तत्रैव सन्मात्रं वर्तते । एतस्मिन् जगद्विलासे सत्स्फुरणयोर्यदि भेदो भवेत्तर्ह्यस्यैतद्विलासे कौशल्यं किं स्याद् न किमपि स्यादित्यर्थः । एतस्य यो विलासो वर्तते सत्वानंदेनैव । यथैक एव नटः स्वशरीरे वेषद्वयं लीलयैव संपादयति जनैश्चार्धनारीनटेश्वरः स उच्यते । तत्प्रदर्शने कुशलो नटः शिवस्वरूपमाच्छाद्यो-

मास्वरूपमेव दर्शयति। तथैवोमास्वरूपाच्छादनेन शिवस्वरूपमेव दर्शयति। तत्प्रदर्शनेऽपि नटस्य भेदो न भवतीति सर्वजनप्रसिद्धम्। तथैक एव सुखस्वरूपः सत्त्वेन यदा प्रतीयते न तत्र ज्ञानं वर्तते। ज्ञानत्वेन प्रतीयते चेन्न तत्र सन्मात्रप्रतीतिः। एककालावच्छेदेनोभयप्रतीतिर्न युक्ता। स्वरूपे भेदाभावात्। यथैकैव शर्करा शर्करायाः स्त्रीपुरुषयोर्मध्ये वर्तते। तयोर्भोग्यमपि सैवास्ति। अत एव भोग्यभोक्तृत्वेऽपि द्वैतं नैवोपजायते। तथैव सत्स्फुरणे परस्परस्य विनोदेप्यानन्दरूपेणैव वर्तेते। तत्र पुरुषप्रकृत्यादिकं भाषणमप्यौपचारिकमेव। पूर्वोक्तप्रकारेण भोग्यभोक्तृत्वाभावेऽपि स्वसुखास्वादनं वर्ण्यते ॥ २ ॥

परस्परानुरागेणान्योन्यं गृह्णाति सर्वथा।
किंवा द्वैतनिमित्तेनैक एव भासते द्विधा ॥ ३ ॥

पदच्छेदः—परस्परानुरागेण अन्यः अन्यं गृह्णाति सर्वथा। किंवा द्वैतनिमित्तेन एकः एव भासते द्विधा।

पदार्थसहितोन्वयः—परस्परानुरागेण (परस्परस्य प्रीत्या) अन्यः (द्वयोरेकः शिवो वा शक्तिर्वा) अन्यं (शिवं शक्तिं वा) सर्वथा (सर्वैः प्रकारैः सर्वैरंगैः) गृह्णाति (आत्मसात्कुरुते ग्रसति वा) किंवा (अथवा) एकः एव (केवलमात्मारामः) द्वैतनिमित्तेन (स्वात्मानं सत्तास्फूर्तिरूपाभ्यां दर्शयितुमिच्छन्) द्विधा भासते (एक एव सन् प्रकारद्वयेनात्मानं दर्शयति) ॥ ३ ॥

विवरणम्:—पुरा भोग्यभोक्तृत्वं यदुक्तं तत्तु भेदसापेक्षमेव। न वस्तुतः। साऽपेक्षा त्वेवंप्रकारेण वर्तते। सन्मात्रं चिन्निरपेक्षमेव स्याद्यदि तर्हि ज्ञानाभावेन सन्मात्रं घटकुड्यादिकमिव जडमेव

स्यात्। तथैव ज्ञानमपि सद्व्यतिरेकेणासद् वंध्यापुत्रखपुष्पादिवद् भवेदेव। अत एव स्वस्यासत्त्व-जडत्वनिवारणाय परस्परसापेक्षत्वं वर्तते। एतयोर्य आनन्दानुभवो वर्तते तदेव भोग्यमित्युच्यते। एतेन स्वानंदानुभवेन न कोऽपि भेदकल्पनावकाशः। यत्प्रातीतिकमेव वर्तते तत्तु तेन सत्स्फुरणेन स्वरूपतोऽभेदेनैव कवलीकृतं। अत एव भेदाभावेनाभेदस्वरूपं सिद्धमिति चेदभेदस्याप्यनवकाशादेव भेदाभेदयोरप्यौपचारिकत्वमेव। एवं पुरुषप्रकृतित्वेन तेन सत्स्फुरणेन भेदाभेदेन विनैव स्थीयते। इत्यग्रेपि विचारणीयम्।

यत्स्वरूपे न चैकत्वं द्वैतं तत्र कथं भवेत्।
न जानामि स्वरूपं ते द्वैतमद्वैतमेव वा ॥ ४ ॥

पदच्छेदः——यत्स्वरूपे न च एकत्वं द्वैतं तत्र कथं भवेत्। न जानामि स्वरूपं ते द्वैतं अद्वैतं एव वा।

पदार्थसहितोन्वयः——यत्स्वरूपे (यस्य परमात्मनः स्वरूपे) एकत्वं (एकोऽयमिति भाषा) च (अपि) न (नास्त्येव) तत्र (तस्मिन् स्वरूपे) द्वैतं (शिवशक्ती इत्यादिरूपकं) कथं (केन प्रकारेण) भवेत् (न किमपि भवेदेवेति भावः) ते (तव भोः परमात्मन्) स्वरूपं (वस्तुतत्त्वं) द्वैतं (शिवशक्त्यात्मकं) अद्वैतं (शिवशक्त्यादिभावविरहितमेकं) एव (निश्चयेन) वा न जानामि (कतरदिति न बोधामि ज्ञानाविषयत्वात्) ॥ ४ ॥

विवरणः——परमात्मस्वरूपेऽद्वैतभाषणमपि न संभवति। सापेक्षद्वैताभावाद्। द्वैतसद्भावे

द्वैतमिति संभाषणं संभवति। असत्यसद्भावे हि सदित्युच्यते। जडसद्भावे हि स्फुरणमित्युच्यते। सद्विचारेण नासत् किमपि स्थातुं शक्नोति। तथैव ज्ञानविचारणेनापि न जडत्वसद्भावः प्रतीयते। अत एव सन्मात्रमुत स्फुरणमात्रमेषापि निरपेक्षत्वेनोक्तिर्न भवेदेव यत उक्तिरपि न भवेदेव ततः कुतोऽद्वैतं। द्वैताद्वैतादि किमपि भाषणं न संभवति। उत वाचारंभणमात्रेणैव द्विरूपेण प्रतीयते। एवं सत्स्फुरणेन स्वरूपमात्रमेव। तत्र द्वैताद्वैतादिकं नास्त्येव। उत सा भाषाप्येतदेव। अहो! यत्स्वरूपे न कोऽप्याकारो वर्तते तत्र भेदस्तु किमात्मकः। आकारवति वस्तुन्येव भेदाः सजातीयविजातीयस्वगतात्मका दृश्यन्ते। यथा वृक्षद्वये सजातीयभेदः। उपलवृक्षयोर्विजातीयभेदः। शाखापल्लवादीनां स्वगतभेदः प्रतीयते। तत्रैव वाग्व्यापारोऽपि भवत्येव। संमतिश्लोकः॥ चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया। अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरं॥ १॥ एतत्सर्वं प्रश्नोत्तरादिकं द्वैते संभवति न त्वद्वैते। वाङ्मनसोरविषयत्वात्। तत्र श्रुतिः। यतो वाचो निवर्तंते अप्राप्य मनसा सह॥ ४॥

स्वरूपसुखवेगेन विश्लेषो न तयोः क्वचित्।
अतिदृढं तयोरैक्यं लीलयापि न हीयते॥ ५॥

पदच्छेदः—स्वरूपसुखवेगेन विश्लेषः न तयोः क्वचित्। अतिदृढं तयोः ऐक्यं लीलया अपि न हीयते।

पदार्थसहितोन्वयः—स्वरूपसुखवेगेन (अधिष्ठानभूतानन्दवशेन) तयोः (शिवशक्त्योः) अतिदृढं (सुदृढं) ऐक्यं (एकरूपत्वं)। लीलया (विनोदेन) क्वचित् (कुत्रापि) विश्लेषः (वियोगः)

न ( न भवत्येव )। तयोः ( शिवशक्त्योः ऐक्यं ) अपि ( निश्चयेन ) न हीयते ( न विहन्यते ) ॥ ५॥

विवरणम्ः—स्वरूपसुखसागरे सत्यज्ञानानंदादिकल्लोले जातेऽपि न भेदकल्पनावकाशः ॥ श्लोकः ॥ अतः सर्वे विकाराश्च वाचा केवलमास्तिकाः। अस्तीत्यारभ्यते नामधेयमात्रं हि तत्सदा ॥ १ ॥ इति ब्रह्मगीतायां ॥ अहो ! सत्सुखस्फुरणेनैव तत्सर्वं विलासमात्रं प्रतीयते। प्रतीतेऽपि जगद्विलासे वस्तुभेदो न भवेदेव। अत एव जगद्विलासस्तु वाचारंभणमेव वर्तते। कुतः। सच्चित्सुखवस्तुप्रत्ययादेव। यद्यत्प्रतीतं भवति तत्तु सत्स्फुणेनैव। एतदेवाग्रेपि विचारणीयम् ॥ ५ ॥

स्नेहयुक्तावगारे तौ जातेऽपि दृश्यबालके।
वियोगभीतितस्त्वैक्यं विभिद्येत न कर्हिचित् ॥ ६ ॥

पदच्छेदः—स्नेहयुक्तौ अगारे तौ जाते अपि दृश्यबालके। वियोगभीतितः तु ऐक्यं विभिद्येत न कर्हिचित् ॥ ६ ॥

पदार्थसहितोन्वयः—दृश्यबालके ( नामरूपात्मकदृश्यबालके ) जाते ( उत्पन्ने सति ) अपि ( निश्चयेन ) तौ ( प्रकृतिपुरुषौ ) स्नेहयुक्तौ ( अविभक्तप्रीतिकौ परस्परानुरक्तौ एव भवत इत्यर्थः ) तु ( पुनः ) वियोगभीतितः ( वियोगस्यासहमानत्वेन हेतुना ) ऐक्यं ( तयोरेकसत्त्वं ) कर्हिचित् ( कस्मिन्नपि काले ) न भिद्यते ( न पृथक्त्वेन वर्तते सदैकरूपेणैव तौ वर्तेते इत्यर्थः ) ॥ ६॥

विवरणम्ः—सत्स्फुरणमेव प्रकृतिपुरुषत्वेन कथ्यते। तेनैव स्वरूपानुभवेनैषा द्वैतरूपेण प्रतीतिः। प्रतीतेऽपि द्वैतरूपे वस्तुतो द्वैतं न भवति। कुतः। सदैव स्वसुखे स्वसुखौत्सुक्यं वर्तते।

अत एव वियोगभीत्यापि द्वैतस्यावकाशो न भवति । अतो जातेपि जगद्विलास एतत्सत्स्फुरणमात्र-मेव राजते । स्वसुखास्वादनेनैव जगदुत्पत्तिस्थितिलयक्रमेणाप्येतदेव प्रतीयते । अत एव न एत-त्स्वरूपे द्वैतभासो वक्तुमुचितः । एवमग्रेऽपि श्रावयिष्याम इति ॥ ६ ॥

स्वत एतेन द्वंद्वेन जगद्बालं विनिर्मितम् ।
स्वसत्तास्फूर्तितस्तस्य स्वातंत्र्यं नैव विद्यते ॥ ७ ॥

पदच्छेदः—स्वतः एतेन द्वंद्वेन जगद्बालं विनिर्मितम् । स्वसत्तास्फूर्तितः तस्य स्वातंत्र्यं न एव विद्यते ॥ ७ ॥

पदार्थसहितोन्वयः—एतेन ( पूर्वोक्तेन ) द्वंद्वेन ( प्रकृतिपुरुषरूपेण ) स्वतः ( स्वस्मात् स्वली-लयैव ) जगद्बालं ( नामरूपात्मकः प्रपंचः ) विनिर्मितं ( उत्पाद्यते ) तस्य ( तथापि तस्य प्रपं-चस्य ) स्वसत्तास्फूर्तितः ( आत्मनः सत्तास्फूर्तिरूपाभ्यां पृथक् ) स्वातंत्र्यं ( स्वतंत्ररूपं ) न एव विद्यते ( निश्चयेन नास्ति ) ॥ ७ ॥

विवरणम्ः—स्वस्य सुखानुभूतिरेव जगद्रूपेण प्रतीयते । प्रतीतेऽपि जगद्विलासे स्वरूपेऽनेकत्वं न प्रतीयते । यत्रैकत्वमपि न सह्यते तत्र कुतो द्वैतभासः । प्रतीयते चेत् तर्हि तत् सत्स्फुरणमेव । न त्वन्यत् ! सत्स्फुरणयोरपि स्वरूपतो भेदो न भवति । कुतः प्रपंचविलास उच्यते । प्रपंचनिमि-त्तेन स्वकीयसुखास्वादनम् । अग्रेप्येवमेव ॥ ७ ॥

सत्तैका यदधिष्ठानं स्फूर्तिश्चैकापि भूषणम् ।
अनादितोऽपि राजेते रूपेणैकेन केवलम् ॥ ८ ॥

पदच्छेदः—सत्ता एका यदधिष्ठानं स्फूर्तिः च एका अपि भूषणम् । अनादितः अपि राजेते रूपेण एकेन केवलम् ॥ ८ ॥

पदार्थसहितोन्वयः—एका सत्ता ( केवलं सद्रूपत्वं ) यदधिष्ठानं ( ययोः प्रकृतिपुरुषयोः अधिष्ठानं नाम आश्रयभूतं स्वरूपं ) च ( तथा च ) एका स्फूर्तिः अपि ( केवलं चिद्रूपत्वमेव ) भूषणं ( अलंकारः प्रकाशकत्वमिति यावत् ) अनादितः अपि ( देशकालवस्तुपरिच्छेदराहित्येन सर्वदैव ) केवलं एकेन रूपेण ( एकात्मत्वेनैव ) राजेते ( प्रकाशमानौ स्तः ) ॥ ८ ॥

विवरणम्ः—सद्रूपेणैव सज्ज्ञानं प्रतीयते । तथा च ज्ञानेनैव सत्स्फुरणं प्रतीयेत । अत एवैकरूपेण ते शोभेते । अत्र यो द्वैतरूपेण भासः स तु भासमात्र एव न वस्तुतः । यथैकस्मिन्नेव सुवर्णे पीतत्वं काठिन्यं च वर्तेते तथैव सत्स्फुरणाभ्यामेवैतत् प्रकाशते । रूपद्वयेन प्रतीतेऽपि न तत्र द्वैतसद्भावो भवितुमर्हति इति भावः ॥ ८ ॥

कुशलेन तु भेदेन स्वभोगार्थं गतेन वै ।
द्वैतमात्रमनुत्पाद्य लज्जयैक्ये विलीयते ॥ ९ ॥

पदच्छेदः—कुशलेन तु भेदेन स्वभोगार्थं गतेन वै । द्वैतमात्रम् अनुत्पाद्य लज्जया ऐक्ये विलीयते ॥ ९ ॥

पदार्थसहितोन्वयः—तु ( अनादितः एकात्मत्वेनैव वर्तमानयोः तयोः सतोः ) कुशलेन भेदेन ( द्वैतभावजनने धूर्तेन भेदेन ) स्वभोगार्थं ( आत्मनो विलासार्थं ) गतेन वै ( तयोः समीपं प्राप्तेन ) द्वैतं ( द्विधाभावं ) अनुत्पाद्य ( न निर्माय एव ) लज्जया ऐक्ये विलीयते ( तयोरेकात्मत्वे स्वयमेव लज्जया आत्मनाश एव कृतः । एतेन न भेदसिद्धिरिति भावः ) ॥ ९ ॥

विवरणम्ः—स्वस्य यः स्वानुभवो वर्तते स एक उत द्विधा । एकश्चेत् तत्रानुभवोऽपि न संभवति । द्विधा चेत् न तत्र भेदप्रतीतिर्भवति । अत एव स्वरूपे भेदः किमात्मक इति विचारिते सति तत्र विचारोऽपि विलीयते । यथा सैंधवसुता सागरस्य गांभीर्यमनुभवितुं गतवती तत्रैव लीयते तथैवात्रापि स्वरूपसुखसागरे स्वस्य वेदनमस्ति न वेति विचार्यमाणे सत्येव विचारोऽपि तस्मिन्नभेद-स्वरूपे विलीयत एव । न च पृथग्रूपेण स्थातुं शक्यते तेनेति भावः ॥ ९ ॥

देवी देवेन पूर्णास्ति विना देवीं न पूरुषः ।
परस्पराश्रयेणैव जीवनं स्यात्तयोः खलु ॥ १० ॥

पदच्छेदः—दवी देवेन पूर्णा अस्ति विना देवीं न पूरुषः । परस्पराश्रयेण एव जीवनं स्यात् तयोः खलु ॥ १० ॥

पदार्थसहितोन्वयः—देवी ( प्रकृतिः ज्ञानम् ) देवेन ( पुरुषेण सत्तया ) पूर्णा अस्ति ( संपूर्णा भवति । सत्तातिरिक्तं ज्ञानं नास्तीत्यर्थः ) देवीं विना ( प्रकृत्या विहीनः ) पुरुषः न ( पुरुषो नास्ति । ज्ञानातिरिक्ता सत्तापि न भवति ) तयोः ( प्रकृतिपुरुषयोः ) जीवनं परस्पराश्रयेणैव खलु ( इति निश्चयेन ) स्यात् ( भवेत् ) ॥ १० ॥

विवरणम्ः——ज्ञानमेव सद्रूपेणोच्यते । ज्ञानेन विना सदित्युक्तिरपि न संभवति सत्तया विना ज्ञानमप्येवमेवेति ज्ञेयम् ॥ किंबहुना सत्तैव ज्ञानं ज्ञानमेव सत्तेति । एवं परस्परस्य यदैक्यं वर्तते स एवानन्दः । आनन्दभरेण या स्थितिर्वर्तते तदेव स्वसंवेद्यत्वम् । स्वसंवेद्यत्वेनैव जगदाभासो न तु कारणांतरेण । एवमग्रेपि श्रूयताम् ॥ १० ॥

प्रेमवृद्धे तयोरैक्ये सृष्टिश्चाल्पतरा मता ।
सूक्ष्मात् सूक्ष्मतरं व्याप्य स्वयं सर्वं च राजतः ॥ ११ ॥

पदच्छेदः—प्रेमवृद्धे तयोः ऐक्ये सृष्टिः च अल्पतरा मता । सूक्ष्मात् सूक्ष्मतरं व्याप्य स्वयं सर्वं च राजतः ॥ ११ ॥

पदार्थसहितोन्वयः—तयोः ( प्रकृतिपुरुषयोः ) ऐक्ये ( एकरसत्वे ) प्रेमवृद्धे ( परस्परप्रीतितः अतीव विवृद्धे सति ) सृष्टिः च ( जगदपि । चकारोप्यर्थः ) अल्पतरा मता ( अत्यल्पं जातं । नाममात्रमवशिष्टमित्यर्थः ) च ( तथा च तौ ) सूक्ष्मात् सूक्ष्मतरं ( अणोरप्यणीयः यत्किंचिद् भासते तत् ) सर्वं च ( सर्वमपि ) व्याप्य ( स्वरूपेणैव दर्शयित्वेत्यर्थः ) स्वयं राजतः ( स्वतः सत्स्फूर्तिरूपाभ्यामेव प्रकाशेते ) ॥ ११ ॥

विवरणम्ः—एतयोः या प्रीतिर्वर्तते सात्ववर्णनीयैव । एतौ जगदाभासे स्वयमेव राजेते । सूक्ष्मात् सूक्ष्मतरपदार्थेप्यनुगतावेव । एतान्निरपेक्षं तु न किमपि स्वातंत्र्येण प्रतीयते । अत एव भोग्यभोक्तृत्वेऽपि सति न पृथग् भवितुमर्हतः । स्वसंवेद्यत्वेऽपि न द्वैतावकाशोऽस्तीति सिद्धम् ॥ ११ ॥

परस्परनिरालंबौ सृजतो न तृणांकुरम् ।
तौ मिथः स्नेहतश्चापि जीवप्राणाविव स्थितौ ॥ १२ ॥

पदच्छेदः—परस्परनिरालंबौ सृजतः न तृणांकुरम् । तौ मिथः स्नेहतः च अपि जीवप्राणौ इव स्थितौ ॥ १२ ॥

पदार्थसहितोन्वयः—परस्परनिरालंबौ ( परस्परस्य आश्रयं अकुर्वन्तौ प्रकृतिपुरुषौ ) तृणांकुरम् ( अल्पमपि वस्तु ) न सृजतः ( न निर्मिमाते । सत्तास्फूर्तिविहीनं तृणमपि न नामरूपभाग्भवतीत्यर्थः ) च ( तथा ) स्नेहतः अपि ( प्रेमातिशयेनापि ) मिथः ( अन्योन्यं प्रति ) जीवप्राणौ इव ( यथा जीवश्च प्राणश्च तथा ) स्थितौ ( वर्तेते ) यथा जीवप्राणौ अविभक्तौ तथा तौ अपि एकरसात्मकौ एव इत्यर्थः ॥ १२ ॥

विवरणं:—सत्स्फुरणयोर्यः परस्परस्यानन्दानुभवो वर्तते तद्भासकत्वेन या भेदप्रतीतिर्दृश्यते स एव प्रपंचः । सोऽपि तेनैव प्रतीयते । तेन विना न किमपि प्रतीयते । तयोर्भेदाभावात् सत्यज्ञानरूपेणैकमेवानुभूयते । भेदे स्वीकृते नैव तस्य स्वरूपसिद्धिर्भवेत् । अत्र सम्यग्विचारणीयमेव । सत्तातः पृथक्कृते ज्ञानेऽसत्वमेव वर्तते न वा । तथैव ज्ञानात् सत्तायां पृथक्कृतायां जडत्वेन जगदान्ध्यं प्रसज्जेदेव न वा खलु । अत एव सत्त्वं ज्ञानं चैकमेवेति सिद्धम् ॥ १२ ॥

संनिहिते शिवे वै तौ कुशलौ गृहमेधिनौ ।
सदा जागर्ति दांपत्ये कार्यदक्षा महेश्वरी ॥ १३ ॥

पदच्छेदः—सुगम एव ।

पदार्थसहितोन्वयः—शिवे ( पुरुषे ) संनिहिते ( समीपतरवार्तिनि सति स्फुरद्रूपेण विलसति सतीत्यर्थः ) वै ( निश्चयेन ) तौ ( प्रकृतिपुरुषौ ) कुशलौ गृहमेधिनौ ( अतिपटू गृहस्थधर्मभाजौ भवतः । सत्तायां स्फुरद्रूपेण विलसत्यामेव नामरूपात्मकः प्रपंचो भासते इत्यर्थः ) कार्यदक्षा ( प्रपंचघटनापटीयसी ) महेश्वरी ( प्रकृतिः ) सदा ( अविरतं ) दांपत्ये ( दंपत्योर्धर्मे ) जागर्ति ( दक्षास्ति । जगत्सर्जनादिकार्ये व्यापृतास्तीतिभावः ) ॥ १३ ॥

विवरणम्ः—नामरूपात्मके विचित्रजगद्विलासे जातेऽपि तत्र नान्यत्किमप्यनुभूयते । या परस्परस्य प्रीतिर्वर्तते सैव भोगशब्देनोच्यते । सद्रूपः पुरुषो ज्ञानात्मकप्रकृतिविषये प्रीतिं दर्शयति । यदा ज्ञानात्मिका प्रकृतिः पुरुषे सत्तामात्रस्वरूपे प्रीतिं कुरुते तदा सन्मात्रमेवास्ति । एवं परस्परानुरागरक्षणे कुशलावेव । व्यवहृतिकाले सन्मात्रः पुरुषो ज्ञानत्वेनैव राजते । लौकिका वैदिका व्यवहारा ज्ञानमुख्यत्वेनैव संपाद्यन्ते जनैरिति भावः । समाधिकाले तु सन्मात्रमेवानुभूयते महाशयैः । तत्र तु ज्ञानं सन्मात्रमेव नान्यत् । एवं स्वरूपत एकत्वेपि कुशलाभ्यां मुख्यत्वममुख्यत्वं वानुभूयत एव । अतो ज्ञानस्वरूपेणैव नामरूपात्मको भासः । एतेनैव हेतुना दृष्टिसृष्टिसिद्धांतस्तद्रहस्यविद्भिर्यत्रकुत्र प्रदर्शित एव । दृष्टिरेव सृष्टिः दृष्टिसृष्टिः । दृष्टिर्ज्ञानं सैव सृष्टिरूपेण प्रतीयते । एनमर्थं श्रीरामं प्रति वसिष्ठगुरुरप्युक्तवान् ॥ श्लोकः ॥ चिद्विलासः प्रपंचोऽयं सखे ते दुःखदः कथम् । किमिंद्रवारुणी राम सितया कटुकीकृता ॥ अस्यार्थः ॥ भो राम अयं प्रपंचः चिद्विलास एव । तव दुःखदायकः कथं भवेत् । सितया कृता इंद्रवारुण्यपि कटुकत्वेन प्रतीयते किम् ।

अपि तु नैव । किं तु शर्करामधुररसत्वेनैव वर्तते । एवमेतदपि सर्वं भवदीयज्ञानमात्रमेव न त्वन्यत् । एवं भगवानष्टावक्रोऽपि जनकं प्रत्याह ॥ श्लोकः ॥ यत्त्वं पश्यसि तत्रैकस्त्वमेव प्रतिभाससे । किं पृथग्भासते स्वर्णात्कटकांगदनूपुरं ॥ १ ॥ भो जनक यद्यत् त्वं पश्यसि तत्तद्रूपेणैकस्त्वमेव प्रातिभाससे । कटकं हस्तभूषणविशेषोंऽगदो बाहुभूषणविशेषो नूपुरं पादभूषणमेतत्सर्वं सुवर्णात्पृथक्त्वेन वर्तते किम् । अपि तु नैव । एवं पूर्वोक्तप्रकारे चिद्धातुरेव चराचररूपेण प्रतीयते । अत्र समाधिर्वा व्युत्थानं वा प्रकृतिपुरुषादिकं वैतद् भाषणमपि स्वतः पृथक्कृत्य न किमपि प्रतीयते । श्लोकः ॥ सत्स्फुरणं न विद्येत भास्यं भासेत चेत् कथम् । तस्माद् भास्यानुस्यूतोहमेको भासस्य भासकः ॥ १ ॥ यदि मत्सत्तास्फुरणं न विद्येत तर्ह्येतद् भास्यं न किमपि भासेत तस्मात्कारणादेतद्दृश्यवर्गेऽहमेव सत्स्फुरणेनानुस्यूतोऽस्मि नाम तत्प्रकाशयामीति भावः ॥ १३ ॥

यदि कश्चित्तयोर्मध्ये स्वापाज्जागर्ति कर्हिचित् ।
निरस्य स्वप्नवत् सृष्टं स्वयं तिष्ठत्यविक्रियः ॥ १४ ॥

पदच्छेदः—यदि कश्चित् तयोः मध्ये स्वापात् जागर्ति । निरस्य स्वप्नवत् सृष्टं स्वयं तिष्ठति अविक्रियः ॥ १४ ॥

पदार्थसहितोन्वयः—यदि तयोः मध्ये कश्चित् ( उभयोरेकः पुरुषः प्रकृतिर्वा ) कर्हिचित् ( कस्मिन्नपि काले ) स्वापात् जागर्ति ( निद्राया उत्थितो भवति ) केवलं बोधमात्रस्वरूपेण तिष्ठतीति भावः ) स्वप्नवत् सृष्टं निरस्य ( तर्हि यथा स्वप्नसृष्टेः जागृतौ निरासो भवति तथा नामरूपात्मकसृष्टप्रपंचस्य निरासं कृत्वेत्यर्थः ) स्वयं अविक्रियः तिष्ठति ( आत्मनो निर्विकाररूपेणैव तिष्ठति ) ॥ १४ ॥

विवरणम्—एवं ज्ञप्तिमात्रं स्वानुभवेनानुभूयते। नात्र कोऽपि तर्कावकाशः। नैषा तर्केण मतिरापनेया इति श्रुतेः। स्वानुभवसिद्धे प्रत्यक्स्वरूपे क जाग्रदादिविमोक्षान्तम्। केक्षणादिप्रवेशांतं वा। सृष्टिरपि क तदध्यक्षत्वं च क। एवं नित्यजाग्रज्ज्ञप्तिस्वरूपे न बंधमोक्षादिप्रपंचकल्पनावकाशः कोऽपि दृश्यते। अथवापरोक्षसन्मात्रप्रत्यये न द्वैतभासः प्रतीयते सन्मात्रप्रत्ययाविशेषात्। "सन् सन् सन्" इति सन्मात्रेणानुस्यूतत्वात्। "सद्धीदं" "चिद्धीदं" "नित्यःशुद्धो बुद्धः" इत्यादिश्रुतिभ्य एव सन्मात्रेणानुभूयते। अत एव न द्वैतावकाश इति सिद्धम्। आशंका। भवद्भिरद्यपर्यंतं यदुक्तं तेनोक्तप्रकारेण द्वैतसिद्धिरेव स्यात्। कुतोऽद्वैतामिति। चिन्मात्रं प्रकृतिरित्युक्तं पुरा। सन्मात्रं तु पुरुष इत्यधुनैवोक्तवान् भवान्। तत्त्वनादितो द्वैतरूपेणैव वर्तते। प्रकृतिपुरुषादिनामधेयमपि गोऽश्वादिरिव पृथक् प्रतीतिमुत्पादयति। एतस्याक्षेपस्य निवृत्तिर्वक्ष्यमाणश्लोकेनैव भवेत्। तद्भवद्भिरादरेणैव श्रोतव्यमिति ॥ १४ ॥

एकत्वे न भवेद् द्वैतमिदं भेदं ग्रसेद्यतः।
अध्यस्तभेदभावेप्येकं सच्चिद्भ्यां हि शोभते ॥ १५ ॥

पदच्छेदः—एकत्वे न भवेद् द्वैतम् इदं भेदं ग्रसेत् यतः। अध्यस्तभेदभावे अपि एकं सच्चिद्भ्यां हि शोभते ॥ १५ ॥



पदार्थसहितोन्वयः—एकत्वे द्वैतं न भवेत् (यत्र एकत्वं वर्तते न तत्र द्वैतस्य सद्भावः स्यात्) यतः (यस्मात्कारणात्) इदं (एकत्वं) भेदं ग्रसेत् (भेदस्य निर्मूलनं कुर्यात्। भेदायावकाशं न

दद्यादित्यर्थः ) हि ( यस्मात् ) अध्यस्तभेदभावे अपि ( भेदे आरोपिते सत्यपि ) एकमधिष्ठान-भूतं स्वरूपमेव ) सच्चिद्भ्यां शोभते ( सत्तारूपेण ज्ञानरूपेण च प्रकाशते ) ॥ १५ ॥

विवरणम्:—आनन्दस्वरूपात् पृथग् नैतयोः स्वरूपं किमपि विद्वद्भिरनुभूयते। अत एव सत्स्फुरणं सुखस्वरूपत्वेनैव वर्तते। ज्ञानस्वरूपे ज्ञानाभावाभावत्वेन सन्मात्रमेव वर्तते तथैव सन्मात्रस्वरूपेऽपि जडत्वाभावत्वेन ज्ञानमेव वर्तते। नत्वन्यादिति। एतेनैव स्वरूपैकत्वेन भेदतमोदमने चण्डभास्करो नान्यसाधनप्रदीपमपेक्षते। अद्वैतमात्रस्वरूपत्वात्। आशंका। भो भगवन् एतन्निरूपणेन बोध्य-बोधकप्रकारः संभवति। स तु कृष्णार्जुनादिभिः प्रदर्शित एव। तस्याभावो युक्त इति चेत्। शृणु। एतद्रूपेणाप्येतदेव सत्स्फुरणम्। गुरुशिष्यादिना बोध्यबोधकप्रकारे जातेपि न भेदकल्पना भवति। अभेदेनैव तत्सर्वं भवेदेव। भेदप्रतीतिस्तु प्रतीतिमात्रैव। वस्तुतत्त्वे न कोऽपि भेदः प्रती-यते। एतत्सत्स्फुरणं त्वभेदेनैव शोभते। अत्र न कोऽपि भेदभ्रमो भवेदेवेति ॥ १५ ॥

विषयविषयित्वं यन्मिथस्तयोर्विभासते।
विलासादेव तज्ज्ञानं तेन तौ सुखिनौ सदा ॥ १६ ॥

पदच्छेदः—यत् मिथः तयोः विभासते विलासात् एव तत् ज्ञानम् ॥ १६ ॥

पदार्थसहितोन्वयः—तयोः ( प्रकृतिपुरुषयोः ) मिथः ( परस्परं प्रति ) यत् विषयविषयित्वं विभासते ( अन्योऽन्यस्य विषयो भवतीति दृश्यते ) तद् विलासात् एव जातं ( तत्केवलं लीलामात्रं न तु वास्तवं ) तौ तेन सदा सुखिनौ ( तेन विषयविषयिभावेन तौ प्रकृतिपुरुषौ सदा सुखसंपन्नौ भवतः ॥ १६ ॥

विवरणम्ः—एतयोर्भोग्यभोक्तृत्वेनाप्यानंदमात्रत्वं वर्तते तेन तयोः न कापि भेदप्रतीतिर्दृश्यते । सत्स्फुरणयोर्या परस्परसुखानुभूतिः सा तु स्वरूपेणैव । अधुनात्र किं वक्तव्यम् । एतौ विना नात्र किमपि दृश्यते । यथा प्रदीपः प्रभां प्रकाशयति । अत्र विषये प्रकाश्यप्रकाशकभावेपि न भेदप्रतीतिर्दृश्यते । तथैवैतयोः प्रकृतिपुरुषयोरपि विषयविषयित्वं वर्तते । एवं स्वभोगेनैव भोग्यभोक्तृत्वं वाचारंभणमात्रं वर्तते । यथा जलमेव कल्लोलत्वेन वर्तते तत्र न कापि भेदप्रतीतिः । तथैवैतत्सत्स्फुरणेन न भेदस्पर्शोपि जायते । एवमग्रेऽपि विचारयामः ॥ १६ ॥

**शिवशक्तिनामभेदेन शिव एको विराजते ।**
**सकला सृष्टिलीलापि प्रकृत्या पुरुषेण च ॥ १७ ॥**

पदच्छेदः—सुगमः

पदार्थसहितोन्वयः—एकः शिवः ( केवलं स्वरूपं ) शिवशक्तिनामभेदेन ( शिवनाम्ना शक्तिनाम्ना इति नाममात्रभेदेन ) विराजते ( प्रकाशते ) सकला सृष्टिलीलाऽपि ( सकलं नामरूपात्मकं जगदपि ) प्रकृत्या पुरुषेण च ( प्रकृतिरूपेण पुरुषरूपेण च विराजते । प्रकृतिपुरुषरूपाभ्यां नैव भिन्नं वर्तते । केवलं सत्स्फूर्तिरूपमात्रकम् ) ॥ १७ ॥

विवरणम्ः—अत्र जगदाभासे शिवशक्ती एव पूर्णत्वेन प्रतीयेते । एताभ्यां विनैतज्जगदाभासः न कोऽपि पृथग्भवितुमर्हति । अखिलचिन्मात्रस्वरूपत्वेनतत्सत्स्फुरणमेव भासते । अत एव नामद्वयेनैकमेव वस्तु राजते । यथा घटविचारे कृते मृण्मात्रात्पृथग् न किमपि दृश्यते । अत्र श्लोकः ।

गृह्यमाणे घटे यद्वन्मृत्तिका याति वै बलात् । वीक्ष्यमाणे प्रपंचेऽपि ब्रह्मैवाभाति भास्वरम् ॥ १ ॥ यथा घटे गृह्यमाणे सति बलात्कारेण मृत्तिकैवायाति तथैव प्रपंचे विचार्यमाणे सति भास्वरं प्रकाश स्वरूपं ब्रह्मैव सच्चित्सुखत्वेनानुभूयते । अत एव सत्स्फुरणं सुखमात्रमेव स्वसंवेद्यत्वेन स्वयमेव स्वसुखं भुंक्तेऽनुभवतीत्यर्थः । एतदेव जगद्रूपेण कथ्यते । अत्र स्वसुखानुराग एव कारणमेतद्विलासे नत्वन्यत् । एवं स्वरूपत एकत्वेऽपि द्विरूपेणेव प्रतीयते । स्वरूपेण स्वसंवेद्यरूपेण च स्वयमेवानुभूयते । तत्र वेद्यवेदकभाव एतदचिन्त्यरूपे स्वरूपे प्रतीतेऽपि नैताभ्यां विना किंचिदपि वर्तते । यथा एकोऽप्यग्निर्विविधशिखारूपेण प्रतीयते तथाप्यग्निस्वरूपे नानात्वं न वर्तते । स तु दाहकोष्णप्रकाशरूपेणैक एव । तद्वदेतदपि विचित्रजगद्रूपे प्रतीयमानेऽपि भेदगंधं विनैव शोभते । एतज्ज्ञानविलासे ज्ञानत्वेनानुगतेऽपि स्फुरणे नानात्वं न किमपि वर्तते । यथा एकस्मिन्नेवालाते चक्रधनुरादौ प्रतीतेऽप्यालात एक एव । तथैवाहमिदमादौ प्रतीतेऽपि ज्ञानमेकमेव । सन्मात्रं त्यक्त्वा स्फुरणमपि न पृथग्भवितुमर्हति । एतत्सत्स्फुरणरूपेण जगद्विलास एव भवति । एतत्सत्स्फुरणोक्तिरप्युपचारमात्रा । वस्तुत एकमेव स्वरूपं वर्तते ॥ १७ ॥

दण्डयुग्मे यथा नादो गंधः पुष्पद्वयेऽथवा ।
दीपद्वंद्वे यथा द्योतः शब्द ओष्ठयुगेऽपि च ॥ १८ ॥
एक एव भवेन्नित्यं दृग्युगुलेऽपि दर्शनम् ।
एकमेव तथा विश्वं प्रकृतिपुरुषात्मकम् ॥ १९ ॥

पदच्छेदः—सुगमः ॥ १८ । १९ ॥

पदार्थसहितोन्वयः—यथा दण्डयुग्मे ( यथा वाद्यविशेषस्य द्वयोर्दण्डयोः ) नादः ( ध्वनिः ) अथवा यथा दीपद्वंद्वे ( अथवा यथा द्वयोर्दीपयोः ) द्योतः ( प्रकाशः ) अपि च ( तथा च ) ओष्ठयुगे ( द्वयोरोष्ठयोः ) शब्दः नित्यं एको भवेत् ( सदैकत्वेन वर्तते ) दृग्युगुले अपि ( द्वयोर्नेत्रयोरपि ) दर्शनं एकमेव ( एकैव दृष्टिः ) तथा प्रकृतिपुरुषात्मकं ( प्रकृतिपुरुषरूपेण च प्रतीयमानं ) विश्वं ( नामरूपात्मकं जगत् ) एकम् एव ( अद्वैतस्वरूपमात्रमेव ) ॥ १८ । १९ ॥

विवरणंः—यथा वीणेति वाद्यविशेषो दण्डद्वययुतोऽपि एकेनैव मधुरध्वनिना रागकुशलानानन्दयति । यथा वा पुष्पद्वयेपि मकरंदस्त्वेक एव । उत दीपद्वयेपि दीप्तिस्त्वेकैव द्वयोरोष्ठयोरपि वाग्व्यापारस्त्वेक एव । द्वाभ्यां चक्षुर्भ्यामपि दर्शनव्यापारस्त्वेक एव । एवं पूर्वोक्तदृष्टांतपंचकमिव प्रकृतिपुरुषाख्यसत्स्फुरणमेकमेव । सृष्टिः स्वसंवेद्यरूपोच्यते । स्वसंवेद्यत्वेऽपि द्वैतभावो नापाद्यते । एतत्तु द्वैतभाषया विनैव कार्यजनने समर्थम् । जातेऽपि कार्ये न स्वरूपतो विकारी भवति । यत्रैकत्वमपि न सह्यते तत्र कुतो द्वैतत्वेन जगत्कारणत्वम् । न क्वापीत्यर्थः ॥ १८ । १९ ॥

भासमानो द्विधाभाव एकत्वेनैव वर्तते ।
भेदस्तु सुखलोभेन न च वस्तुस्वरूपतः ॥ २० ॥



पदच्छेदः—सुगमः ॥ २० ॥

पदार्थसहितोन्वयः—भासमानः ( प्रतीतिमात्रः न वास्तवः ) द्विधाभावः ( प्रकृतिपुरुषात्मकः

द्वैतप्रत्ययः ) एकत्वेन एव वर्तते ( केवलमेकरूपोऽद्वितीय एवास्ति ) तु ( अपि च ) भेदः ( प्रतीयमानं द्वित्वं ) सुखलोभेन ( स्वात्मानन्दास्वादेच्छयैव प्रतीयते ) न वस्तुस्वरूपतः ( वस्तुनः स्वरूपेऽसौ भेदो नैव वर्तते ॥ २० ॥

विवरणम्ः—नित्योपलब्धस्वरूप आत्माहमेतदपि भेदसापेक्षमेव । निरपेक्षस्वरूपे पूर्वोक्तार्थसंघटनापि न भवेदेव । अत एव एतत्संधिरेवैतयोः प्रकृतिपुरुषयोः स्थानं वर्तते । चिद्रस एवै तत्कार्यकारणरूपेण राजत इति भावः । एवं जातेऽपि जगद्विलासे न द्वैतसिद्धिः । एतत्स्वरूपे परस्परस्नेहमात्रव्यापारः । एतयोर्विलासे न भेदावकाशः । प्रतीतेऽपि रूपद्वये स्वरूपत एकमेवेति सिद्धम् । अनादित्वेनापि स्वसंवेद्यत्वं । स्वसंवेद्यत्वेऽपि न द्वैतावकाशः ॥ २० ॥

पुरुषेण विना साध्वी स्थातुमपि न वाञ्छति ।
तया विना स्वतंत्रोऽपि कार्याक्षमश्च पूरुषः ॥ २१ ॥

पदच्छेदः—सुगमः ॥

पदार्थसहितोऽन्वयः—साध्वी ( पतिव्रता प्रकृतिः ) पुरुषेण विना ( पुरुषविरहिता सती ) स्थातुं अपि ( प्रकृतिरूपेण गोचरा भवितुमपि ) न वाञ्छति ( नेच्छति । सत्ताविहीनं स्फूर्तेः स्वरूपमपि नास्तीति भावः ) च ( तथा च ) पूरुषः स्वतंत्रः अपि ( पुरुषः स्वसामर्थ्ययुक्तोऽपि सन् ) तया विना ( प्रकृत्या अयुक्तः सन् ) कार्याक्षमः ( नामरूपात्मकं जगद्भासयितुम समर्थोऽस्ति )॥२१॥

विवरणम्—एवं एतद्द्वयमपि प्रकृतिपुरुषत्वेन वर्तमानमप्यन्योन्यं विहाय नैव स्थातुं शक्नोति । चित्प्रकाशेनैव सत्त्वं भासते । सत्त्वेनैव हि चित्त्वमिति पुराप्युक्तम् । अतएवान्योन्यजीवनम् । अतः कारणाद्भेदेन विनैव सत्तास्वरूपः पुरुषः शोभते । तत्र ज्ञानमस्त्येव । ज्ञानत्वेऽपि सत्यत्वं वर्तते । अतोऽनयोः स्वरूपमेकमेव न तु द्विधा । एवंप्रकारेण या कार्यप्रपंचप्रतीतिर्वर्तते तत्र निर्विकारत्वेन सत्स्फुरणमेवास्ति । कार्यसद्भावेऽपि कारणसत्तैव वर्तते । न किमपि कार्यं स्वतंत्रत्वेन तत्र प्रतीयते । अत एव कार्यस्य प्रतीतावपि सत्स्फुरणविलास एव सः । अत एव स्वरूपपृथक्त्वेन न कार्यकारणप्रतीतिर्वर्तते । कार्यकारणप्रतीतिं विनैव चिन्मात्रस्वरूप एक एव । न तत्र भास्यभासकत्वं किमपि वर्तत इति सिद्धम् ॥ २१ ॥

या पुरुषप्रकाशा हि तत्सत्तयैव शोभते ।
परस्परस्य भेदस्तु ज्ञातुमपि न शक्यते ॥ २२ ॥

पदच्छेदः——सुगमः ॥

पदार्थसहितोन्वयः——या ( प्रकृतिः ) हि ( केवलं ) पुरुषप्रकाशा ( पुरुषः प्रकाशो यस्याः पुरुषस्य पुरुषत्वं नाम स्वत्वेनात्मत्वमेव रूपं यस्या इत्यर्थः ) तत्सत्तया एव शोभते ( केवलं पुरुषसत्तया राजते न स्वातंत्र्येण ) तु ( अपि तु ) परस्परस्य भेदः ( प्रकृतिपुरुषयोः कल्पितो भेदः ) ज्ञातुं अपि न शक्यते ( कल्पितत्वाद् विवेक्तुमपि न शक्यः केवलं कल्पनामात्र इत्यर्थः ) ॥ २२ ॥

विवरणम्——स्वरूपे यत्स्वसंवेद्यत्वं तदेव प्रकाश्यप्रकाशत्वेन वर्तते । तदेवात्र प्रकृतिरूपेणोच्यते । एतयोः स्वरूपतो न कोऽपि भेदो वर्तते । यत्र यत्प्रकृतिशब्देनोक्तं स तु पुरुष एव । अतोऽधिष्ठान-

त्वेन विनैव न किमपि प्रकृतेः स्वरूपं वर्तते । प्रकृतिपुरुषेणैकमेव स्फुरणं भवति । तस्मात्कारणात् सत्स्फुरणत्वे विचारिते सति स्वरूपत एकमेवानुभूयते न तु द्विधा । यथा सूर्य आलोकश्चैक एव न तु द्वौ । सूर्यतः पृथक्कृतमालोकस्वरूपं न किमपि दृश्यते । तथैवात्रापि विचारणीयम् । बहुनात्र किमुक्तेन । एतयोर्योत्र भेदः प्रतीयते स तु वाचारंभणमात्र एव । विचारे कृते सति नान्यत्किमप्युपलभ्यते । आशंका । प्रकृतिपुरुषयोर्भिन्नत्वेनैवव्यापकत्वेनाधिष्ठानस्वरूपं निश्चीयते । तदेव पुरुषशब्देन कथमुच्यते । इति चेत्तर्हि एतदेव प्रकृतेराधिष्ठानं पुरुष इत्युच्यते । प्रकृत्या विनैवाधिष्ठानोक्तिरपि न संभवेदिति भावः । तस्मात्कारणात् प्रकृत्यधिष्ठानत्वेन निर्गुण एव सगुणत्वं धत्ते । तस्मिन्निर्गुणस्वरूपेऽवलोकिते सति एतत्प्रकृतिप्राकृतं सर्वं तदेव भवति । तत्स्वरूपे न किमप्याधाराधेयत्वं दृश्यते । यथा कल्पांबुविषये न कापि प्रवाहसंख्या भवति । तथैव स्वस्वरूपे पूर्णे सति प्रकृतिपुरुषत्वं नैव दृश्यते । तदेव निर्विशेषत्वेनास्तीति भावः । अत एव प्रकृतिपुरुषयोः पृथक्त्वेन स्थितिर्न भवेदेव । उत प्रकृतिरेका पुरुष एक एवं न किमपि गण्यते । एतत्स्वरूपनिर्णये तर्कबाहुल्येन वाग्जल्पे कृतेऽपि नैतयोर्भेदनिर्णयो भवतीति सिद्धम् ॥ २२ ॥

कर्पूरं तस्य गंधं च गुडत्वं माधुरीं तथा ।
न विवेक्तुं कदा शक्यं कर्तुरायास एव सः ॥ २३ ॥

पदार्थसहितोन्वयः—कर्पूरं तस्य गंधं च ( कर्पूरं परिमलं च ) तथा गुडत्वं माधुरीं ( मधुरतां ) कदा विवेक्तुं शक्यं न ( कस्मिन्नपि काले पृथक्कर्तुं शक्यं न ) सः कर्तुः आयासः एव ( पृथक्करणे प्रयतमानस्य पुरुषस्य प्रयत्नः केवलं निष्फल एवास्ति ) ॥ २३ ॥

विवरणम्ः—यथा गुडे मधुरत्वं वर्तते तथैव कर्पूरे मकरंदो वर्तते । तत्र पृथक्करणे यः प्रयत्नो वर्तते स तु वृथैव तथैवैकस्मिन्नेव स्फुरणे सत्ता ज्ञानमित्युच्यते । यथोदके द्रवत्वं वर्तते तथैव स्फुरणं सद्रूपत्वेन वर्तते । तत्र न कोऽपि भेददर्शने समर्थः ॥ २३ ॥

प्रकाशग्रहणेनापि दीपो हि प्राप्यते खलु ।
शक्तिप्रेक्षणतस्तद्वच्छिव एव प्रपद्यते ॥ २४ ॥

पदच्छेदः—प्रकाशग्रहणेन अपि दीपः हि प्राप्यते खलु । शक्तिप्रेक्षणतः तद्वत् शिवः एव प्रपद्यते ॥ २४ ॥

पदार्थसहितोन्वयः—प्रकाशग्रहणेन अपि (नेत्राभ्यां यदा प्रकाशो गृह्यते अवलोक्यते) खलु दीपः हि प्राप्यते (तदा समग्रं दीपज्योतिरेव निश्चयेन गृह्यते) तद्वत् (तेन प्रकारेण) शक्तिप्रेक्षणतः (शक्त्या रूपस्य विवेचनेन) शिवः एव प्रपद्यते (केवलं शिवो लभ्यते । सत्तादर्शनमेव जायते) ॥ २४ ॥

विवरणम्ः—अन्यदपि । यथा दीप्तिग्रहणाय प्रवृत्तौ सत्यां दीपस्यैव ग्रहणं भवति । तथैव प्रकृतिस्वरूपस्य निश्चयाय प्रवृत्तौ सत्यां पुरुषस्यैव निश्चयो भवति । यथा दीपेन विना प्रकाशसिद्धिर्न भवति । तथा पुरुषेण विनैव प्रकृतिप्राकृतं सर्वं मृषैवानुभूयते । अत्रैकस्मिन्नर्थेऽभिधानद्वयेन न विषयो भिद्यते । यथा घटः कलश इति नामद्वयेन न घटस्वरूपे भेदकल्पनापि वर्तते ॥ २४ ॥

यथा रवौ प्रभा भाति प्रकाशे रविरेव च ।
तथा भेदं विना तौ हि राजेते ज्ञप्तिमात्रतः ॥ २५ ॥

पदार्थसहितोन्वयः—यथा रवौ प्रभा भाति ( यथा सूर्ये प्रकाशो वर्तते ) च ( अपि च ) प्रकाशे रविः एव ( प्रकाशे केवलः सूर्यो भाति ) तथा ( तेन प्रकारेण ) तौ ( प्रकृतिपुरुषौ ) हि ( निश्चयेन ) ज्ञप्तिमात्रतः ( केवलं ज्ञप्तिरूपेण ) भेदं विना राजेते ( भेदराहित्येनैकत्वेनेति यावत् शोभेते ) ॥ २५ ॥

विवरणम्—एतदर्थेऽन्योऽपि दृष्टांतो विचारणीयः । यथा रवेः प्रकाशो बाहुल्येन वर्तते तयोः स्वरूपतोऽभेदो वर्तते । यथा सूर्यस्वरूपं विहायैव सूर्यप्रकाशो न पृथग्भवितुमर्हति । प्रकाशेन विनापि सूर्य इत्युक्तिरपि उक्तिमात्रैव । तत्र यथैकस्मिन्नर्थे नामद्वयमेव वर्तते । तथैव प्रकृतिपुरुषात्मके शिवशक्त्यात्मके वा नामद्वय उक्तेऽपि न स्वरूपभेदः कोऽपि वर्तते । अत्र भेदकल्पनाप्रतीतिस्त्वविचारत एव । तत्र नामद्वयेनापि स्वरूपमेकमेव शोभते । एवमग्रेपि विचारयामः ॥ २५ ॥

॥ श्लोकः ॥

**प्रतिबिंबोहितो बिंबः प्रतिबिंबप्रकाशकः ।**
**एक एवोभयत्रापि तद्वद्द्वैतस्य दर्शनम् ॥ २६ ॥**

पदच्छेदः—एव उभयत्र अपि तद्वत् द्वैतस्य.................. ॥ २६ ॥

पदार्थसहितोन्वयः—बिंबः प्रतिबिंबप्रकाशकः ( बिंबः प्रतिबिंबस्य द्योतकः अस्ति ) प्रतिबिंबोहितः ( प्रतिबिंबेन चोभये स्थले एकः केवलो बिंबो भवति ) तद्वत् ( तेन प्रकारेण ) द्वैतस्य दर्शनम् ( प्रकृतिपुरुषरूपाभ्यां द्विधा प्रत्ययो न द्विधा परमेक एव ) ॥ २६ ॥

विवरणम्ः—बिंबतः पृथक्त्वेन प्रतिबिंबस्योत्पत्तिर्न भवति स्वातंत्र्येणापि तस्य सिद्धिर्न भवेदेव । अत एव स्वरूपत एकत्वेऽपि द्विरूपेण यत्प्रतीयते तत्तु प्रातीतिकमेव । उत बिंबसकाशात्प्रातीबिंबप्रतीतिर्भवतीति चेत् तत्रापि प्रतिबिंबे बिंबस्वरूपमेव मुख्यत्वेन वर्तते । प्रतिबिंबस्वरूपदर्शनेन बिंबो दर्शनविषयो भवति । तत्र बिंबप्रतिबिंबभावयोरपि न भेदो वर्तते । तस्मात् कारणात् प्रतिबिंबमिषेण मुख्यत्वेन बिंब एव सुशोभितोऽस्ति । तथा च भेदगंधेन विनैव दृङ्मात्रद्रष्टृरूपं स्वप्रकाशकत्वेन स्वरूपमेवावलोक्यते । तत्रावलोकने प्रकाश्यप्रकाशकभावेन सत्स्फुरणे प्रतीतेऽपि न भेदावकाशः । चित्स्वरूपविचारेण सत्स्वरूमेव निश्चीयते । सत्स्वरूपविचारेण च चित्स्वरूपमेव निश्चीयते । अतो नात्र परस्परत्वं परस्परमिषेणैक एव शोभते । अत एव स्वसंवेद्यत्वेन स्वयमेव स्वास्मिन् भेदाभावेनापि विलासेनैव विलसेत् ॥ २६ ॥

**सर्वशून्यस्य निष्कर्षो यः पुरुषोऽनया कृतः ॥**
**भर्तृसत्ताविशेषेण शक्तिर्भार्या विनिर्मिता ॥ २७ ॥**

पदच्छेदः—निष्कर्षः यः पुरुषः अनया........शक्तिः भार्या ॥ २७ ॥

पदार्थसहितोन्वयः——यः ( सद्रूपः परमात्मा ) सर्वशून्यस्य निष्कर्षः ( सर्वद्वैतं ग्रसित्वा स्वयं सारभूतः सन्नपि ) अनया ( स्फुरद्रूपया ) पुरुषः कृतः ( पुरुषनाम्ना प्रकाशं नीतः ) भर्तृसत्ताविशेषेण ( भर्तुः पुरुषस्य सत्तायाः विशेषत्वेन स्फूर्तिमत्त्वेन ) शक्तिः भार्या विनिर्मिता ( प्रकृतिनाम्नी विलासिन्युद्भूता । सत्तायाः स्वसंवेद्यत्वेन यद्विशेषस्फुरणं तेनैव प्रकृतिपुरुषाविति कल्पनाया अवकाशो जात इति निष्कर्षः ) ॥ २७ ॥

विवरणम्ः—स्वस्मिन् स्वरूप एतत्पूर्वोक्तं न किमपि विद्यते तदेव सर्वशून्यत्वेनोच्यते । एष निश्चितार्थः । अत एव न तत्र कार्यकारणभावः । न च ज्ञातृज्ञेयत्वम् । न च ध्यातृध्येयत्वम् । अपि तु तत् स्वरूपमात्रमेव । तत्र चपलत्वाचपलत्वे अपि न विद्येते । क्रियाक्रियत्वे नापि ज्ञानाज्ञानत्वे । अपि तु ज्ञानमात्रमेव तत् । न तत्र विशेष्यविशेषणभावः । कुत उत्कर्षापकर्षत्वमस्तीति । स्त्रीत्वं पुरुषत्वं नपुंसकत्वं जरठत्वं बालादित्वं वा न विद्यते तत्र । तदेव स्वलीलयैव सर्वरूपेण स्वयमेव भवति । संबंधं विनैव गगनमिव स्वयमेव सर्वं व्याप्य तिष्ठति । अतः सर्वशक्तिसंपन्नः सन्मात्रः पुरुष इत्युच्यते । स्वशक्त्या संपन्नो विगतकुण्ठितभावो राजते स्वयम् । आशंका । केयं स्वशक्तिर्या भवद्भिर्विख्यायते मुहुर्मुहुः । इति चेत् शृणु । यस्मिन् सन्मात्रस्वरूप एतद्दृश्यमात्रस्यात्यन्ताभावस्तस्मिन् पुरुषे यस्याः सकाशात् पुरुषत्वं वर्तते तेन सन्मात्रपुरुषेण विना प्रकृतेरपि प्रकृतित्वं नास्त्येव । अत एव तयोर्न कोऽपि भेदो वर्तते । अत्र यन्नानात्वं प्रतीयते तत्तु नास्त्येव । उभयत्र भावाभावत्वेनापि सत्स्फुरणमेवैकत्वेन सर्वाधारत्वेन सर्वरूपत्वेन सिद्धमिति ॥ २७ ॥

शिवेपीदं शिवत्वं च प्राणेश्वर्या विना यया ।<br>
न शक्नोति व्यवस्थातुं सा शिवेन स्वयं कृता ॥ २८ ॥

पदच्छेदः—शिवे अपि इदं ॥ अन्यः सुगमः ॥ २८ ॥

पदार्थसहितोन्वयः—च ( पुनः ) शिवे अपि ( पुरुषे अपि ) इदं शिवत्वं ( पूर्वोक्तं पुरुषत्वं ) यया प्राणेश्वर्या विना ( यया प्रकृत्या विना ) व्यवस्थातुं न शक्नोति ( नारोपितं भवति । स्फूर्तिं विना

सत्तायाः सत्तात्वमपि केनोक्तं स्यात् । न केनापीतिभावः ) सा ( प्रकृतिः ) स्वयं शिवेन कृता ( शिवादधिष्ठानादेव तस्याः प्रतीतिर्भवति न तु स्वातंत्र्येण । सत्तां विना स्फूर्तेरसंभव इति ज्ञेयम् ) ॥ २८ ॥

विवरणम्:—एतत्सत्स्फुरणं यद्यपि रूपद्वयेन प्रतीयते तथापि न तत्र द्वैतं वर्तते । अपि तु तदेकमेव । एतत्प्रकृतिपुरुषयोर्यद्वर्तनं तत्त्वभेदेनैव । यथा रवेः प्रकाशो वर्तते तथैवैतत्स्वरूपे कार्यकारणभावोऽपि वर्तते । सोऽप्येकत्वेनैव । अत एव सदेव ज्ञानं चिदेव सत् । एतेनोक्तेन प्रकारेणानयोः परस्परेण सिद्धिर्भवेदेव । यथा सुवर्णस्यैव प्रतिमा वर्तते । तत्र या भेदप्रतीतिर्वर्तते तत्तु वाचारंभणमेव । उत सुवर्णं तद्दीप्तिश्च दीप्तिरेव सुवर्णभासकत्वेन वर्तते । सुवर्णेन विना स्वयं दीप्तिरपि नास्त्येव । एवं पूर्वोक्तप्रकारेण प्रकृतिपुरुषस्वरूपेऽभेदेनैवान्योन्यासिद्धिः । ज्ञानेनैव सद्रूपमनुभूयते । सन्मात्रेणैव ज्ञानसिद्धिर्जायते ॥ २८ ॥

ऐश्वर्यवान् ययेशोऽपि संसारीव कृतः शिवः ।
आरोप्य च स्वयं सर्वं स्वात्मत्वेनैव सा स्थिता ॥ २९ ॥

पदच्छेदः—यया ईशः अपि संसारी इव । स्वात्मत्वेन एव ॥ २९ ॥

पदार्थसहितोन्वयः—यया ( शक्त्या ) शिवः ( सद्रूपः परमात्मा ) ईशः अपि ( स्वतंत्रोऽपि ) ऐश्वर्यवान् ( ईश्वरत्वभाक् ) संसारी इव कृतः ( अकर्ता सन् कर्तेव भासितः ) च ( अपि च ) सा ( शक्तिः ) स्वयं ( स्वत एव ) सर्वं ( ईश्वरत्वादिकं ) आरोप्य ( अध्यासरूपेण दर्शयित्वा ) स्वात्मत्वेन एव स्थिता (स्वरूपेणैव वर्तते । सत्तायां तया न कोपि विकारः कारितः । सा एकैव सर्वरूपेण भासते)॥२९॥

विवरणम्ः—ऐश्वर्येण सह यदीश्वरत्वं वर्तते पुरुषे सत्यस्वरूपे तत् सर्वं शक्तेर्ज्ञानस्यैव सामर्थ्यं वर्तते। ज्ञानेन विना ईश्वरो वा तदैश्वर्यं वा सन्मात्रे सर्वाधारस्वरूपे न किमपि सिध्येत्। अतो हेतोर्ज्ञानमेव सन्मात्रत्वेन वर्तते। पुरा यदैश्वर्येण सहेश्वरत्वमुक्तं तदपि प्रकृतेः कौशल्यमेव न तु सन्मात्रस्य। अत एव स्वयं सुशोभिता भवति प्रकृतिरेव। वस्तुतस्तु सन्मात्रात्पृथक् प्रकृतेः किं स्वरूपम्। सन्मात्रात् पृथग् न किमपि वर्तते। अपि तु व्यवहार एव कुशलत्वमेतस्याः प्रकृतेर्ज्ञान-मात्रायाः। सापि सन्मात्रात् पुरुषात् पृथग् न। अपि तु स्वरूपेणैव वर्तते। तस्याः प्रकृतेः कार्य-त्वेन स्वसंवेद्यत्वेन यो भेदः प्रतीयते सोऽपि सन्मात्र एव। एतत्त्वनुभवचक्षुर्युक्तः पुरुषधौरेयो जनः स्वयमेव जानातीत्यलं विस्तरेण ॥ २९ ॥

पत्युररूपतां दृष्ट्वा सर्वथा लज्जयाऽनया।
आत्मालंकरणं सृष्टं नामरूपात्मकं जगत् ॥ ३० ॥

पदच्छेदः—पत्युः अरूपतां लज्जया अनया.....................॥ ३० ॥

पदार्थसहितोन्वयः—पत्युः ( केवलं सद्रूपस्य परमात्मनः ) अरूपतां दृष्ट्वा ( रूपराहित्यं वीक्ष्य ) अनया ( प्रकृत्या ) लज्जया ( लज्जान्वितत्वात् ) सर्वथा ( सर्वप्रकारैर्लज्जागोपनाय ) नाम-रूपात्मकं जगत् ( दृश्यं वस्तुजातं ) आत्मालंकरणं सृष्टं ( आत्मानं विशेषेण दर्शयितुं आत्मशोभार्थ-मिति यावद् निर्मितं ) ॥ ३० ॥

विवरणम्ः—सन्मात्रपुरुषे न प्रकृतिकल्पनावकाशः। अत एव स एव मृषा नामरूपात्मक-

मिषेण प्रतीयते । आरोपशून्ये सन्मात्रस्वरूपे नानात्वाभावेन न किमपि चित्रं दृश्यते । यथैकस्मिन् सुवर्णगोले नानात्वाभावेन सुशोभितत्वं न वर्तते । सति भूषणसमुदाये सुशोभितत्वं प्रसिद्धं भवति । तथैव सन्मात्रेऽद्वैतस्वरूपे जगदलंकाराभावेन न किमपि शोभितत्वमुचितम् । अत एव ज्ञानस्वरूपा या प्रकृतिर्वर्तते तया स्वकौशल्येनैष नानात्वेन जगदाभासः प्रदर्शितः । वस्तुतस्तु न स जगदाभासः प्रकृतिपुरुषयोः पृथग्भवितुमर्हति । पृथक्त्वाभावेपि स्वनिपुणत्वेन प्रकृतिरेव पुरुषे सन्मात्र एतन्नामरूपात्मकमध्यस्तं भूषणत्वेन कल्पयति । तेन लोकेऽप्रसिद्धमपि सन्मात्रमेतन्नामरूपात्मकालंकारनिमित्तेन ज्ञानविषयो भवति । एतस्यारोपितस्याधिष्ठानेन विना न क्वापि सिद्धिः संभवति । निरधिष्ठानभ्रमायोगात् । अत एव तत्कृतं सर्वं वाचारंभणमात्रमेव । संमति श्लोकः ॥ अतः सर्वे विकाराश्च वाचा केवलमास्तिकाः । अस्तीत्यारभते नामधेयमात्रं हि तत्सदा ॥ १ ॥ इति ब्रह्मगीतायां ॥ अतः कारणादेतन्नामरूपात्मकं विश्वं वाचारंभणमात्रमेव । तेन कल्पितनामरूपात्मकप्रपंचेन स्वाधारत्वात् सन्मात्रमिति प्रतीतिविषयभूतं नामधेयं प्रदर्शितम् । वस्तुतस्तु सन्मात्रं स्वरूपस्यापरित्यागेन ध्येयमात्रत्वेनैवावतिष्ठते । यथा रज्जुरेव कल्पितसर्पादीनामाधारत्वेन वर्तते । सर्पादीनां भावाभावे सत्यपि न रज्जोरभावो वर्तते । उतालंकारस्य भावाभावेऽपि न सुवर्णे कोऽपि विकारो वर्तते । तथैव नामरूपादि प्रपंचस्य प्रतीतावपि पुरुषः सन्मात्र एव वर्तते । एवं पूर्वोक्तप्रकारेण पुरुषे विचित्रजगद्रचनारूपालंकारेण सुशोभितत्वं कृत्वा स्वयमेव तुष्टा भवेत् सा । पुरुषे तु न कोऽपि विकारो वर्तते । पुरुषात्पृथक्त्वाभावेन प्रकृतिरपि न विकारभाग् भवति । अत एव तद्विलासोऽपि वाचारंभणमात्र एव ॥ ३० ॥

नानात्वं दर्शितं तत्र यत्रैक्यमपि दुर्लभम् ॥
सुभगयाऽनया शक्त्या स्वलीलामात्रतः किल ॥ ३१ ॥

पदच्छेदः——यत्र ऐक्यं अपि....सुभगया अनया ॥ ३१ ॥

पदार्थसहितोन्वयः——यत्र ( यस्मिन् सद्रूपे ) ऐक्यं अपि दुर्लभम् ( एकत्वस्याप्यनवकाशोऽस्ति ) तत्र ( तस्मिन् केवलचिद्घने स्वरूपे ) अनया सुभगया शक्त्या ( अनया स्फूर्तिरूपया सौभाग्यवत्या प्रकृत्या ) स्वलीलामात्रतः ( केवलं स्वविलासार्थं ) नानात्वं दर्शितं ( अनेकविधं दृश्यजातं भासितम् ) ॥ ३१ ॥

विवरणम्:——एकमेवाद्वितीयत्वेन परिपूर्णत्वेन द्वैताभावेन वर्तते । एकमपि द्वैतसापेक्षमेव । अत एवैकसंख्याविरहितत्वमपि ज्ञेयम् । यथा कल्पांतजलेन स्वयमेव जलं निरुद्धं भवति । तथैवैकस्मिन्नपि संख्याविरहिते सन्मात्र एकत्वं तथा पूर्णत्वमपूर्णत्वमपि न संघटते । अहो स्वरूपे यदेकत्वं वर्तते तत्तु द्वितीयसापेक्षमेव । अत एव न वस्तुत एकत्वं वर्तते । यत्रैकत्वं न वर्तते तत्र कुतः प्रपंचजालम् । एतत्प्रतीतिस्तु प्रकृतेश्चित्रं नाम प्रकृतेर्विलासः । पुरुषे त्वेतस्यात्यन्ताभावः । यद्यापि पुरुषाद्भिन्नस्य नास्य किमपि स्वरूपं वर्तते तथापि मनोराज्यजनितो यो यः पदार्थो वर्तते स सर्वो मनोरथमात्र एव । न तेन पदार्थसमुदायेन कापि कार्यसिद्धिर्भवेदेव । तथैवैष प्रकृतिजनितोऽपि विश्वविलासो मनोरथमात्र एव । न तु तस्मात्पृथक् ; आशंका । एकत्वेन वर्तमाने सन्मात्रस्वरूपे प्रकृतिरिति भाषाऽपि न संभवति । तर्हि कुत एष विलासः । सन्मात्रस्वरूपे न कोऽप्यव-

काशो वर्तते। स्वतंत्रत्वेनापि न स्थातुं शक्यते। अत एव कुत्र केन प्रकारेणैनं विलासं करोति। प्रकृतिः सहवर्तमानास्ति चेत्। तर्हि कुतो निर्दोषत्वम्। स पुरुष एव सर्वदोषभाग् भवति। एवं-प्रकारेणोक्तं चेत् तर्हि शृणु। चिन्मात्रस्वरूप एतत्प्रकारको न कोऽपि संकोचो वर्तते। चैतन्यस्य नैवैष संकोच उचितः। एतत्तु जड एवास्तु न वा। परं न स्वप्रकाशे चैतन्यपुरुषे स्वतंत्रे युक्तम्। तत्र तु स्वविलासेनैव सर्वं भवेदेव। जातेऽपि विलासे तत्र विकारकल्पनापि न भवेत्। नाद्वितीयत्वं विहन्येत। स्वसुखोत्कर्षेण सर्वं भवेदेव। अहो चिन्मात्रेऽद्वितीयस्वरूपे कुतो हेत्वंतरापेक्षा। आनन्दस्वरूपेणास्तित्वेऽपि न तत्र तद्भानं वर्तते। ज्ञप्तिमात्रत्वेऽपि ज्ञानाविषयत्वं वर्तते। द्वितीयस्याभावात्। द्वितीयत्वाभावेऽपि स्वस्मिन् स्वसंवेद्यत्वेन वेद्यवेदकत्वं भवेदेव। स्वावलोकनेऽपि स्वयमेव स्वविषयो भवति। स्वरूपतस्तु न किमपि विषयविषयित्वं संभवति। विषयविषयित्वभावेऽपि न स्वरूपहानिर्वर्तते सन्मात्रादर्थांतराभावात्। स्वरूपदृष्टिस्तु द्रष्टृत्वेन विनैवास्ति। तदेव समीचीनम्। सति द्रष्टृत्वेऽपि न स्वरूपेण स्वरूपतोन्यथा भवेत्। यथा निष्पंदेपि वायौ न तदभावो वर्तते। स्पंदे सति तत्र द्वितीयत्वं कल्पितुं नोचितम्। अपि तु स्पंदास्पंदादिरूपेण वायुरेव न त्वन्यदिति सिद्धम्। तथैव दृङ्मात्रत्वेन पूर्णत्वेन च तत्रैव द्रष्टृत्वं वर्तते। दृश्यद्रष्टृत्वं तु वस्तुविलास एव। न त्वन्यत्। संमतिश्लोकः ॥ गुणव्यतिकरः कालो निर्विशेषः प्रतिष्ठितः। पुरुषश्चेदुपादानमात्मानं लीलया सृजेत् ॥ १ ॥ इति भागवते। एवं पूर्वोक्तप्रकारेणात्मस्वरूप आत्मस्वरूपादन्यन्न किमपि संभवति। अत एव प्रतीतेऽपि जगद्विलासे स्वयमेव प्रतीयते। तस्मात् कारणात् स्वशक्तिविलासेनैव विश्वाकारेण नानात्वे प्रतीतेऽपि स्वरूपमेकमेव। यथा घृतस्वरूपे

तच्छक्तिर्घृतत्वेन वर्तते । तत्रानेकत्वेन घृतकणेषु प्रतीतेष्वपि न तत्रानेकत्वं दृश्यते । उत रविस्वरूपे तद्रश्मिस्वरूपे वा न कोऽपि भेदकल्पनावकाशः । तत्र जलाशयोऽतीव गंभीरत्वेन प्रतीयते । सोऽपि न तद्भिन्नत्वेन वर्तते । प्रतीतेऽपि मृगजलांबुधौ न तत्र रविबिंबः किमपि स्पृश्यति । तथैवैतस्मिन् सर्वे दृश्यविलासे भासमानेऽपि न वस्तुतः स्वरूपभेदो वर्तते । किंबहुना यत्र प्रकृतिपुरुषयोरपि न भेदो वर्तते तत्र क्व विलासरचना न क्वापीत्यर्थः ॥ ३१ ॥

कांत उत्कर्षतां नीतः स्वसंकोचनतो यया ।
आत्मसंकोचतो येन प्रिया प्रकाशिता तथा ॥ ३२ ॥

पदच्छेदः—कांतः उत्कर्षतां......स्वसंकोचनतः यया । आत्मसंकोचतः येन.......॥ ३२ ॥

पदार्थसहितोन्वयः—यया ( प्रकृत्या ) स्वसंकोचनतः ( आत्मनः संकोचं कृत्वा ) कांतः ( पतिः पुरुषः ) उत्कर्षतां नीतः ( वरत्वेन भासितः । प्रकृतेः संकोचने सद्रूपस्यैव विशेषत्वमिति भावः ) तथा ( अपि च ) येन ( पुरुषेण ) आत्मसंकोचतः ( स्वरूपाच्छादनेन ) प्रिया ( प्रकृतिः ) प्रकाशिता ( प्रकाशं नीता । सत्तायास्तिरोधान एव ज्ञानस्योत्कर्ष इति भावः ) ॥ ३२ ॥

विवरणम्ः—अहो ! प्रकृतेर्विलासोऽवर्णनीय एव । स्वस्याः स्वामिनमपि स्वयमेव दर्शयति स्वस्या अभावप्रदर्शनेनैव । अत्रायमभिप्रायो वर्तते । सन्मात्रप्रकाशे सति तत्र न किमपि ज्ञानं वर्तते । सर्वप्रकारेण सन्मात्रमेव विलसतीति भावः । यथा मृदुत्वेच्छया कर्पूरस्वीकारे सति तत्र शुभ्रत्वमपि स्वयमेवागच्छति । अत्र दृष्टांत एकदेशित्वेन वर्तते । दार्ष्टांतस्तु पूर्णत्वेनैव वर्तते । अहो !

सन्मात्रमेव ज्ञप्तित्वेन शोभते । ज्ञाने यः सद्भावो वर्तते तदेव सन्मात्रम् । अतः सन्मात्रानुभूतिसमये स्वविलासेन सह न किमपि ज्ञानं वर्तते । अतःकारणात् प्रकृतेस्तिरोधानसमये पुरुषस्य प्रकटत्वमुक्तम् । अधुना प्रकृतिस्वरूपेऽवलोकिते सति नानात्वेन तद्विलासोपि दृश्यते । स तु नान्यस्य कस्यापि वर्तते । स्वस्याभावमात्रः प्रदर्शित इव । स्वाभावप्रदर्शनेन केवलं स्वं हि सर्वरूपेण प्रदर्शयति । यथा वन्हिः स्वं लुप्तप्रायं कृत्वा स्वयमेवात्मानं शिखारूपेण दर्शयति । तत्राप्येवमेव । उत यथा वेशसंपादने कुशलो नटः स्वयमेव राज्ञो वेशं संपाद्य स्वकीयनटत्वं लुप्तप्रायं कृत्वा राज्ञो वेशं दर्शयति । तथैव स्वरूपेणानन्यथाभावेनैतत्सर्वविश्वविलासप्रदर्शने कुशलः सन्मात्रः पुरुष आत्मानं लुप्तप्रायं कृत्वा प्रकृतिस्वरूपं दर्शयति । स्वसंवेद्यत्वेन ज्ञातृज्ञेयज्ञानादिकं स्वयमेव भवति । अत्रैकत्वे स्वरूपेण पूर्णत्वेपि रूपद्वयं प्रतीयते । एवं दृश्यद्रष्टृत्वप्रदर्शनेन प्रकृतेः स्वरूपं सुशोभितं कृतं तेन सुशोभितकरणेनापि स्वयमलिप्तत्वेनैव राजते ॥ ३२ ॥

यस्या दर्शनलोभेन द्रष्टृत्वं प्रतिपद्यते ।
अदृष्ट्वा तां स्वयं तेन द्रष्टृत्वमपि हीयते ॥ ३३ ॥

पदार्थसहितोन्वयः—यस्याः दर्शनलोभेन ( यां प्रकृतिं द्रष्टुमिच्छता पुरुषेण ) द्रष्टृत्वं प्रतिपद्यते ( स्वं प्रति द्रष्टेत्यभिधानं प्राप्तं ) तां अदृष्ट्वा ( परं प्रकृतिरूपमात्मव्यतिरिक्तं किमपि नास्तीति ज्ञात्वा ) तेन स्वयं द्रष्टृत्वमपि हीयते ( तेन पुरुषेणाहं प्रकृत्या द्रष्टेति योऽभिमानोऽङ्गीकृत आसीत् सोऽपि त्यक्तः ॥ ३३ ॥

विवरणम्ः—एष एव द्रष्टृविलासो वर्तते यदेकत्वेऽपि नानात्वप्रदर्शनम् । एतदेव ज्ञानमात्रं प्रकृतिस्वरूपं वर्तते । स्वयमेव द्रष्टृत्वाभिमानेन वर्तते । नो चेत् कुतो दृश्यद्रष्टृत्वं दृश्यद्रष्टृत्वाभावेनैव स्वकीयसन्मात्रस्वरूपेण वर्तते । एवं स्वरूपावलोकने यदुत्सुकत्वेन वर्तनं तदेव प्रकृतिस्वरूपम् । तद्व्यतिरेकेण न किमपि प्रकृतिस्वरूपं वर्तते । अतःकारणात् स्वस्य स्वावलोकनमात्रमप्यविक्रियत्वेनैव । एतस्मिन् विलासे जातेऽपि स्वरूपमात्रमेव वर्तते । एवं पूर्वोक्तप्रकारेण स्वस्य द्रष्टृत्वमपि विलासमात्रमेव । स्वकीयस्वरूपे न भेदावकाश इति । एवं भेदाभावेऽपि स्वभावेनैव यत्स्वरूपावलोकनं तदेव जगदित्युच्यते । कुतः । सच्चिदानंदस्वरूपेणैव ब्रह्मस्वरूपं वर्णयति श्रुतिरिति भावः । सत्यं ज्ञानमनंतं ब्रह्मेति श्रुतिः । एवं सत्यज्ञानानन्दत्वेनोक्ते सति नात्र त्रिविधप्रकारं ब्रह्म कल्पितुमुचितम् । अपि तु सन्मात्रमेव चिन्मात्रं चिन्मात्रमेव सन्मात्रम् । सन्मात्रं चिन्मात्रमेव सुखस्वरूपम् । सुखस्वरूपमेव सत्स्फुरणमात्रम् । यथैकस्मिन्नेवामृतस्वरूपे द्रवत्वं मधुरत्वममृतत्वं न पृथक्त्वेन गणितं केनापि । अपित्वेकमेव निश्चितम् । तथैव ज्ञानानंदादिकमपि ज्ञेयम् । तत्र यत्स्वसंवेद्यत्वं वर्तते । तदेव ज्ञातृज्ञानत्वेन जगदित्युच्यते । नत्वन्यत् । संमतिश्लोकः । ज्ञानं न ज्ञेयतो भिन्नं ज्ञानाज्ज्ञेयं पृथग् न हि । अतो न त्वितरत्किंचित् तस्माद्भेदो न विद्यते ॥ १ ॥ इति वासिष्ठे । एवंप्रकारेण सन्मात्रस्वरूपे यत्स्वसंवेद्यत्वं वर्तते स ज्ञानविलास एवेति ध्वनितम् ॥ ३३ ॥

कांतायाः प्रणयेनैव येनेदं भासितं जगत् ॥
विना तां प्रकृतिं सोपि केवलाद्वयरूपकः ॥ ३४ ॥

पदच्छेदः—सुगमः ॥ ३४ ॥

पदार्थसहितोन्वयः—कान्तायाः प्रणयेन एव ( केवलं प्रकृत्याः स्फुरद्रूपायाः स्वतन्त्रशक्त्याः प्रेमतो विलासेन च ) येन ( परमात्मना ) इदं जगत् भासितं ( इदं नामरूपात्मकं विश्वं आत्मस्वरूपे दर्शितं ) तां प्रकृतिं विना ( तदात्मनः स्फुरद्रूपं विहाय ) सः अपि ( सद्रूपः पुरुषोऽपि ) केवलाद्वयरूपकः ( केवलमेक एवास्ति । स्वरूपेणैव राजते इत्यर्थः ) ॥ ३४ ॥

विवरणम्:—एवं पूर्वोक्तप्रकारेण स्वानुभूत्या अनुसारेण सन्मात्रः पुरुषः स्वरूपं लुप्तप्रायं कृत्वैतं विश्वविलासं प्रदर्शयामासेति । प्रदर्शितेपि विश्वविलासे ज्ञानरूपायाः प्रकृतेर्न कोऽपि भेदो वर्तते । अत एव तद्विलासेपि न यथार्थत्वं किमपि स्वीकृतं विद्वद्भिः । एवं स्वानुभवानुसारणैष जगद्विलासो गंधर्वनगरतुल्यत्वेन ज्ञायते । यथा कटककुण्डलादौ प्रतीतेपि न सुवर्णस्वरूपं लुप्तप्रायं भवेदेव । तथैव नित्यजाग्रत्सन्मात्रस्वरूप एष विश्वविलासो वाचारंभणमात्र एव । न सन्मात्रस्वरूपे कोऽपि द्वैतावकाश इति सिद्धम् ॥ ३४ ॥

निर्गुणं निर्विकारं च सत्तामात्रस्वरूपकम् ।
यत्तत्प्रकृतियोगेन विश्वरूपेण भासते ॥ ३५ ॥



पदच्छेदः—सुगमः ॥

पदार्थसहितोन्वयः—यत् ( परमात्मस्वरूपं ) निर्गुणं ( त्रिगुणरहितं शुद्धं ) निर्विकारं ( नामरूपात्मकदृश्यविकाररहितं केवलं ) सत्तामात्रस्वरूपकं ( सद्रूपेणैव प्रतीयमानं । अस्तीत्येव केवलं

यत्स्वरूपं ) च ( पुनः ) तत् ( एवंभूतं परमात्मस्वरूपं ) प्रकृतियोगेन ( प्रकृत्याः स्वतंत्रात्मकशक्त्या आश्रयेण ) विश्वरूपेण भासते ( स्वयमेव विश्वाकारेण विराजते ) ॥ ३५ ॥

विवरणम्:—स्वानुभवेन सिद्धेऽपि सन्मात्रस्वरूपे ज्ञानेन विनैव न किमपि सत्त्वमनुभूयते । स्वानुभूतेः प्राक् सन्मात्रमप्यसदिव प्रतीयते । तत्र सन्मात्रस्वरूपे स्वानुभव उदिते सत्येष सर्वो विश्वविलासः सन्मात्र एवेति ज्ञायते । सन्मात्राद् व्यतिरेकेण न कोऽपि विश्वविलासः प्रतीयते । अत एवैतत्सर्वं सन्मात्रमेव । एतदपि प्रकृतेर्महत्त्वमेव वर्तते । यस्याः सकाशात्सन्मात्रः पुरुष एव विश्वाकारेण प्रतीयते । तत्र विश्वप्रतीतिस्तु स्वसंवेद्यमात्रैव । स्वसंवेद्यत्वमपि ज्ञप्तेर्विलास एव वर्तते । न तु सन्मात्रे किमपि प्रकृतिः प्राकृतमित्यादि भवतीति भावः ॥ ३५ ॥

जागरूकं शिवं कृत्वा वेद्यैस्तु बहुभिः सदा ।
या भोजयत्यसौ तानि तृप्तो जग्ध्वा तया सह ॥ ३६ ॥

पदच्छेदः—वेद्यैः तु । भोजयति असौ । अन्यः सुगमः ॥ ३६ ॥

पदार्थसहितोन्वयः—या ( स्फुरद्रूपा शक्तिः ) शिवं जागरूकं कृत्वा ( सद्रूपं शिवं स्फुरद्रूपेण भासयित्वा ) बहुभिः वेद्यैः तु सदा भोजयति ( अनेकशः ज्ञानैः सदा व्यापृतं करोत्येव ) असौ ( शिवः ) तया सह तानि जग्ध्वा ( तया ज्ञप्त्या सह सर्वं वेद्यं जग्ध्वा भक्षयित्वा नाम स्वात्मनि विलीनं कृत्वा ) तृप्तः ( केवलं स्वात्मसुखमग्नः सत्तामात्रो वर्तते ) ॥ ३६ ॥

विवरणम्:—स्वसंवेद्यत्वेन स्वयमेव शिवभावं प्राप्तः सन्नेतद् दृश्यजातं भोक्तेव भुक्त्वापि

न कामपि तृप्तिमनुभवति । स्वसत्ताव्यतिरेकेण प्रकृतेस्तत्कार्यस्य चाभावात् । स्वानुभवमात्रेण वेद्यवेदकत्वादिनानात्वे जातेऽपि न स्वरूपाद्विचलति । ज्ञानात्मकप्रकृत्या सह वर्तमान एव तद्रचित-भोज्यसमुदायं तया सह भुक्त्वा तृप्त एवमपि भवेदेव । प्रीतेराधिक्येन तां स्वतोऽभेदरूपेण ज्ञात्वा मोदत इति भावः । स्वस्य प्रकृतेर्विलासप्रकाशनेन भोक्तृत्वं भवेदेव । भोगस्यानुसंधानेन भोग्य-भोक्तृत्वमपि लीयते तत्रैव । अत एव भोग्यानुभवकालेऽपि न द्वैतभाव उत्पद्यते । एतेन सर्वथैव द्वैतात्यंताभाव उक्त इति ॥ ३६ ॥

निद्रितं वल्लभं दृष्ट्वा भासयाति चराचरम् ।
विश्रांतैव यदा या च स्वयं नष्टा भवत्यपि ॥ ३७ ॥

पदच्छेदः—विश्रांता एव । अन्यः सुगमः ३७ ॥

पदार्थसहितोन्वयः—या ( स्फुरद्रूपा शक्तिः ) वल्लभं ( पतिं शिवं ) निद्रितं दृष्ट्वा ( केवलं सत्ता-स्वरूपं ज्ञात्वा ) चराचरं भासयति (सर्वं दृश्यजातं प्रकाशयति) च (अपि च या) यदा विश्रांता एव ( यस्मिन्नेव क्षणे विश्रांता व्यापाररहिता भवति तस्मिन्नेव क्षणे ) स्वयमपि नष्टा भवति॥ ३७ ॥

विवरणम्—अहो ! ज्ञानस्वरूपेण या प्रकृतिरित्युक्ता तया स्फुरणात्मकप्रकृत्या सन्मात्रेऽस्फु-रत्स्वरूपे पुरुष एतच्चराचरात्मकं दर्शितम् । एतच्चराचरात्मकविलासप्रदर्शनेपि न तत्र स्वरूपे कोऽपि विकारो भवति । बहुनात्र किमुक्तेन । ज्ञानस्वरूपे ज्ञानभावोऽपि नास्त्येव । कुतो विलासः । ज्ञानस्वरूपे यो द्वैताभावो वर्तते तत्तु सन्मात्रस्य पुरुषस्यैव महत्त्वं वर्तते । स्वयमस्फुरत्स्वभावेनापि

ज्ञानस्वरूपेण स्वरूपे चराचररूपेण विश्वप्रतीतिरपि भवेदेव । जातेऽपि विश्वविलासे स्वरूपतो ज्ञानाभावेन कुतो विश्वप्रतीतिर्वर्तते । नैव वर्तते । नो चेत्तर्हि कः कं प्रकाशयति । प्रकाश्यप्रकाशकाभावेऽस्फुरत्स्वरूपमेव सिद्धम् । अत एव कार्यकारणभावाभावेनाकारणत्वमपि वक्तुमशक्यमेव । अत एतेन पूर्वोक्तेन एतावन्मात्रं सिद्धं यद्वस्तुस्वरूपे न कोऽपि कल्पनासद्भाव इति ॥ ३७ ॥

कांते लीने प्रकर्षेण यस्याः स एव राजते ।
अन्योन्यं द्योतयित्वा तावभिन्नौ भवतः सदा ॥ ३८ ॥

पदच्छेदः— तौ अभिन्नौ । अपरः सुगमः ॥ ३८ ॥

पदार्थसहितोन्वयः—यस्याः प्रकर्षेण (यस्याश्चिच्छक्तेरुत्कर्षेण) कांते लीने (सद्रूपे वल्लभे अप्रतीयमाने सत्यपि) स एव राजते (सः सद्रूप एव प्रकाशते । सद्रूपमेव चिद्रूपेण भासते इत्यर्थः) अन्यः अन्यं द्योतयित्वा (सद्रूपं चिद्रूपस्य प्रकाशकं चिद्रूपं च सद्रूपस्य द्योतकं भूत्वा) तौ सदा अभिन्नौ भवतः (तौ सद्रूपचिद्रूपौ प्रकृतिपुरुषौ सर्वदा ऐक्येनैव वर्तेते) ॥ ३८ ॥

विवरणम्:——यथा कुशलधियः केचित् सुवर्णकाराः सुवर्णभूषणेतीव रम्यचित्रविचित्राकृतिं कुर्वन्ति तत्र च सामान्यदृष्ट्या विचित्राकृतेरन्यन्न किमपि दृश्यते । अपित्वतीव रम्यचित्राकृतिरेव प्रेक्षकचित्ताकर्षिका भवेदेव । कुशाग्रधियो वस्तुप्रेक्षकास्तु तस्यां विचित्राकृत्यां विद्यमानायामपि निरावरणत्वेन सुवर्णमेव पश्यन्ति । तथा चिन्मात्रप्रकृतिकृतं यन्नानाविधं जगच्चित्रं दृश्यते तत्र जगच्चित्रे

सर्वेऽपि जना मोहिता एव । न तद्दृष्ट्या सन्मात्रं किमपि दृश्यते । अन्ये विशिष्टदृशस्तु विद्यमानेऽपि जगच्चित्रे सन्मात्रमेव स्वानुभवदृष्ट्या पश्यन्ति । किंबहुना चिन्मात्रस्वरूपे सन्मात्रेण विना न किमप्यन्यदस्ति। अत एव सन्मात्रेणैव चिन्मात्रं प्रतीयते । अत्र परस्परप्रतीतिविषयेऽपि न भेदकल्पनावकाशः । अपि तु अभेदेनैव स्वरूपं वर्तते । यथा रवेः स्वप्रकाशावलोकने द्रष्टृदृश्यभावे जातेऽपि न तत्र द्वैतं वर्तते। द्वैतवत्प्रतीतेऽपि न तत्र वेद्यवेदकत्वं संभवति । तत्र तु दृश्यद्रष्टृत्वं स्वरूपमात्रमेव । तथा सन्मात्रवस्त्वपि स्वावलोकनेन ज्ञानमित्युच्यते । अत एवैकस्मिन् स्वरूपे सन्मात्रत्वं ज्ञानमात्रत्वं च संभवत एव । अत एव सन्मात्रज्ञप्तिस्वरूपे न दृश्यद्रष्टृत्वभाव उपपद्यते । यथा दर्पणद्वयेऽप्येक एव प्रकाशो वर्तते तत्र द्विवचनेऽपि नार्थभेदो वर्तते । तत्र प्रेक्षकबुद्ध्यैव द्वैतमिव प्रतीयते । दर्पणस्तु प्रकाशमात्र एव । तथैव ज्ञानमात्रस्वरूपे न किमपि ज्ञेयज्ञानत्वं वर्तते । अत एव शब्दद्वयेनापि ज्ञप्तिरेकैवानुभूयते । अत एवैकस्मिन्नेव सत्स्फुरणरूपे ज्ञानज्ञेयरूपेण प्रतीतेऽपि न तत्र भेदावकाशः । अत एव तत्स्फुरणे कार्यकारणभावो न संभवति । अत एव सत्स्फुरणमद्वैतरूपेणैव वर्तते । तस्मादानन्दस्य भेदोऽपि न युक्तः । एवं सच्चिदानन्दरूपेणैकमेव चित्स्फुरणं विद्यते । तदेव स्वसुखमनुभवतीत्युक्तमग्रेऽपि ॥ ३८ ॥

यस्याः संबंधमात्रेण सुखभोगेऽपि वर्तते ।
यया विनाल्पभोगं च नैव गृह्णाति कर्हिचित् ॥ ३९ ॥

पदच्छेदः—सुगमः ॥ ३९ ॥

पदार्थसहितोन्वयः—यस्याः संबंधमात्रेण ( यां चिच्छक्तिमंगीकृत्यैव ) सुखभोगे अपि वर्तते ( आत्मानन्दमनुभवितुं योग्यो भवति ) च ( पुनः ) यया विना ( यां चिच्छक्तिमनंगीकृत्य ) अल्पभोगं ( क्षुद्रानंदमपि ) कर्हिचित् न एव गृह्णाति ( कस्मिन्नपि काले भोक्तुं नार्हत्येव )॥ ३९ ॥

विवरणम्ः—एवं पूर्वोक्तप्रकारेण स्वानंदानुभवने चिन्मात्रमेव हेतुर्वर्तते । चिन्मात्रस्वरूपेण स्वसुखेऽनुभूतेऽपि न तत्र भेदावकाशः । किंबहुना तयोर्ज्ञानानन्दयोर्न कोऽपि भेदो वर्तते । एतच्च शब्दद्वयेन विनैवानन्दस्वरूपमेव प्रत्यक् चैतन्यम् । तस्मात्कारणाच्चिन्मात्रस्वरूपश्चिन्मात्रत्वेनैव सुखस्वरूपो वर्तते । अत्र ग्राह्यग्राहकत्वेन न जल्पो युक्तः । अधुना भोग्यभोक्तृत्वे सत्यपि नानन्दस्वरूपे भेदकल्पनावकाशः । क्षुद्रानन्दानुभवकालेऽप्येष एव ब्रह्मानन्दोऽनुभूयते । अत एव लोकत्रयेऽप्यात्मानन्दानुभवं विनैव न किमप्युपलभ्यते । विषयानन्दोऽपि स्वात्मसुखेनैव वर्तते । अत एव स्वानंदं स्वयमेवानुभवतीति सिद्धम् । अत्र भोग्यभोक्तृत्वमप्येकस्मिन्नेव । एवं सत्स्फुरणमात्रेणैवैष विश्वविलासो वर्तते । सत्स्फुरणमेव स्वानुभूत्या ज्ञायते । सत्स्फुरणविलासे जातेऽप्येक एवात्मा सन्मात्रो वर्तते ॥ ३९ ॥

यच्छिवत्वं यया शक्त्या येन सापि पतिव्रता ।
ऐक्येनैव सुखास्वादः सदा ताभ्यां च गृह्यते ॥ ४० ॥

पदच्छेदः—यत् शिवत्वं । अन्यः सुगमः ॥ ४० ॥

पदार्थसहितोन्वयः—यया शक्त्या ( तत् शिवत्वं केवलं यया शक्त्या वर्तते । स्फूर्तिं विना न शिवेऽपि शिवत्वं इति भावः ) येन सा अपि पतिव्रता ( येन शिवेन च सा शक्तिरपि शक्तिरित्युच्यते । सत्तां विना ज्ञानेपि न ज्ञानत्वमित्यर्थः ) ताभ्यां ( शिवशक्तिभ्यां ) सुखास्वादः ( आनन्दभोगः ) सदा ऐक्येनैव गृह्यते ( सदैकरूपेणैव क्रियते ) ॥ ४० ॥

विवरणम्:—परमानन्दस्वरूपे परमात्मनि परमात्मत्वेन याऽनुभूतिर्वर्तते स एव प्रियोत्तम इति विद्वद्भिर्ज्ञेयम् । यस्य सकाशात् स्वस्या अनुभूतिरपि अनुभूयते स एव प्रियतम इत्युच्यते । यथा सूर्यप्रभा सूर्येणैव प्रकाश्यते । तथैव पुरुषेणैव स्वप्रकृतिः प्रकाश्यत इति भावः । अस्तु । स्वरूपे यत् स्वसंवेद्यत्वं वर्तते सैव पतिव्रतेत्युक्तिर्युक्तैव । कुतः । तर्हि तत्प्रकाशात् पुरुषे पुरुषत्वं वर्तते । यद्येषा ज्ञप्त्याख्या प्रकृतिर्न भवेत् तर्हि पुरुषे पुरुषत्वं किमात्मकम् । स्वसंवेद्यत्वाख्या प्रकृतिरपि सन्मात्रपुरुषेण विना न कथमपि सिध्येत् । अहो ! स्वरूपे स्वरूपोक्तिरपि द्वितीयसापेक्षैव । अतः स्वं स्वयं द्वितीयत्वेनाकल्पयत् । तत् स्वसंवेद्यत्वं यस्य सकाशात् सिध्यति तत्र स्वसंवेद्यत्वं स्वरूपभूतत्वेनैव तिष्ठति । यथा घटो मृण्मय एव । नान्यः । उत तरंगमिषेण जलमेव वर्तते । तथैव प्रकृतिमिषेणापि पुरुष एव वर्तते । यथा जलव्यतिरेकेण नापि तरंगादिकं किमपि वस्तुतोऽस्ति । तरंगाभावे तरंगस्थं जलं इत्युक्तिरपि कथं भवेत् । तथैव स्वविनोदार्थं स्वयमेव स्वानुभूतिरूपेण राजते । तस्मिन् स्वविलासे विलसत्यपि न तत्र भेदकल्पनावकाशः । तत्र मुख्यत्वं गौणत्वमेतत्प्रकारको यो व्यवहारो भवति स विलासमात्र एव । सन्मात्रं प्रकाशमात्रं शांतस्वभावं निश्चलस्वरूपं स्फुरत्स्वरूपमाधेयस्वरूपमाधारस्वरूपं प्रदर्श्यापि पुरुषो न स्वरूपतो भेदकल्पनावकाशं ददाति । कुतः । सुखा-

स्वादनेनैवैतत्सर्वं विलासमात्रं भवति। परस्परानुरागे स्वसुखमास्वादयत इत्यर्थः। तस्मिन् सुखास्वादने भोक्तृत्वभोग्यत्वमपि न संभवति। सुखमात्रे सुखास्वादने जातेऽपि न तत्र भेदप्रतीतिर्वर्तते। यथाऽब्धिरेव सरिद्रूपेण वर्तते। स्वस्याभेदेऽप्ययमब्धिरियं सरिदेतत्प्रकारको न कोऽपि भेदो वर्तते। तथैवैषा प्रकृतिरेष पुरुष इति नास्ति भेदः। सुखास्वादने सत्स्फुरणमपि सुखमात्रमेव भवेत्। तस्मात्प्रकृतिपुरुषादिकसंज्ञापि सुखस्वादनविलासे विलीयत एव। एतयोर्यो विलासो वर्तते स त्वभेदेनैव ॥ ४० ॥

गतिरेका यथा वायुः सुवर्णं कान्तिरेव वा ॥
एको नाम शिवः साक्षाच्छक्तिरूपात्मकस्तथा ॥ ४१ ॥

पदच्छेदः——गतिः एका। साक्षात् शक्तिरूपात्मकः। अन्यः सुगमः ॥ ४१ ॥

पदार्थसहितोन्वयः——यथा वायुः एका गतिः ( यथा वायोः वायुवेगस्य च पृथक्करणं अशक्यमेव ) वा सुवर्णं कान्तिरेव ( अथवा सुवर्णं यथा केवला कान्तिः न कचित् कान्तेः पृथक् ) तथा नाम ( तथा निश्चयेन ) एकः शिवः ( केवलः शिवः ) साक्षात् ( प्रत्यक्षं ) शक्तिरूपात्मकः ( शक्तिरूपेणैव भासमानः न तस्याः पृथक् ) ॥ ४१ ॥

विवरणम्——यथा वायुः स्पंदरूपेण वर्तते। तस्मिन् वायौ या स्पंदचेष्टा वर्तते न तस्याः किमपि वायुतः पृथक्त्वं प्रतीयते। उत सुवर्णे यत्पीतत्वं वर्तते तत्तु सुवर्णमेव। न तस्मात् तत् पृथग् भवितुमर्हति। तथैव सन्मात्राच्च शिवाच्च शिवापि न पृथग् भवितुं युक्ता। एवं पूर्वोक्तप्रका-

रेण सत्स्फुरणयोरभेदेन सिद्धयोः सतोः सर्वं ज्ञप्तिमात्रमित्युक्तिरपि सर्वं सन्मात्रं भवेदेव । एवंमप्येतत्सर्वं सन्मात्रमित्युक्ते सति चिन्मात्रमनुक्तत्रापि भवेदेव । द्वैताभावादितिभावः ॥ ४१ ॥

मृगमदस्तदामोद उष्णत्वं वन्हिरेव वा ।
एकमेव न भिन्नं या शक्तिस्तथा शिवोऽपि सः ॥ ४२ ॥

पदार्थसहितोन्वयः—मृगमदः ( कस्तूरी ) तदामोदः ( कस्तूर्याः परिमलश्च ) वा ( अथवा ) वह्निः ( अग्निः ) उष्णत्वं ( अग्नेरुष्णत्वं च ) एकं एव न भिन्नं ( यथा अभिन्नरूपेणैव वर्तते ) तथा या शक्तिः सः शिवः अपि ( तथा शक्तिरपि केवलः शिवो न तद्भिन्ना ) ॥ ४२ ॥

विवरणम्ः—अन्यदपि । तथा मृगमदमकरंदो वर्तते सोऽप्यभेदेनैव । उत वन्हेर्यदुष्णत्वं वर्तते न तत्र वह्नेः कोऽपि भेदः प्रतीयते । तथैव शक्तिशिवयोरपि ज्ञेयम् । सन्मात्राच् शिवात् पृथग् न कापि शक्तिर्वर्तते तत् कार्यं वा । न वस्तुत एतयोर्भेदः कोऽपि वर्तते । प्रकृतिपुरुषयोः पुल्लिंगस्त्रीलिंगात्मको यो भेदः प्रतीयते सत्वानंदस्वरूपे लीयत एव ॥ ४२ ॥

शार्वरी दिवसश्चैव न तिष्ठतो यथा रवौ ॥
शिवशक्ती तथा चेमे स्वाधिष्ठाने न तात्त्विकौ ॥ ४३ ॥

पदच्छेदः—च इमे=चेमे । च एव=चैव ॥ ४३ ॥

पदार्थसहितोन्वयः—यथा रवौ ( यथा सूर्यस्य सन्निधौ ) शार्वरी ( रात्रिः ) दिवसः च ( दिवसोऽपि ) न तिष्ठतः एव ( न कदापि स्थातुं शक्तौ ) तथा च इमे शिवशक्ती ( तथा च एते शिवश्च शक्तिश्च

उभयौ अपि ) स्वाधिष्ठाने ( यत्र तौ भासेते तत्र परमात्मस्वरूपे ) तात्विकौ न ( न सत्यत्वेन तिष्ठतः । केवलं आभासमात्रौ ) ॥ ४३ ॥

विवरणम्ः—वासरो रजनीत्यादिभेदप्रतीतिस्तु तावत्कालमेव स्याद् यावत्कालं सूर्यमण्डलं न प्रेक्षितं ताभ्याम् । सूर्यमण्डलावलोकने तूभयसंज्ञे अपि मृषैव भवतः । तथैव वस्तुदृष्टयानंदपदावलोकने सत्स्फुरणमप्यानन्दमात्रेणैव प्रतीयते । न तु ततः पृथगेतयोः सत्ताज्ञानयोस्तत्त्वम् । यत्तत्त्वं वस्तुस्वरूपं स त्वानंद एव । आनंदेन विना न किमप्येतत्स्वरूपं सिध्येदिति भावः । वस्तुभूत आनंदस्वरूपे न किमपि शिवशक्त्यात्मकं द्वैतं विद्यते । यथा शर्करायां गुडे च स्त्रीपुरुषभेदे प्रतीतेऽपि मधुररसास्वादनकाले मधुररसे न किमपि स्त्रीत्वं वा पुरुषत्वं वा प्रतीयते । तथैवानंद स्वरूप एष प्रकृतिपुरुषभेदोऽपि न प्रतीयत इति भावः ॥ ४३ ॥

बहुनात्र किमुक्तेन भेदमात्रो न युज्यते ।
ॐकारो नास्ति सत्स्फूर्त्योः कार्यकारणरूपकः ॥ ४४ ॥

पदार्थसहितोन्वयः—अत्र ( अस्मिन् विषये ) बहुना उक्तेन किम् ( बहुभाषणस्य न किमपि प्रयोजनमस्ति ) भेदमात्रो न युज्यते ( अनयोः शिवशक्त्योः भेदोऽपि न युक्तो भवति ) सत्स्फूर्त्योः ( अनयोः सत्तास्फूर्त्योः ) कार्यकारणरूपकः ( कारणरूपेण कार्यरूपेण च भासमानः ) ॐकारः नास्ति ( प्रणवोऽपि न विद्यते ) ॥ ४४ ॥

विवरणम्ः—स्वरूपतो यज्ज्ञप्तिमात्रेण वर्तते तत्रायं निर्गुणोऽयं सगुण इत्येतत्कल्पनायां माना-भावादेकस्मिन्नेवाऽद्वितीयत्वेन प्रकाशमाने सत्येतत्कारणमेतत्कार्यमित्यादिकल्पनानामनवकाशात् सत्स्फुरणमात्रेण वस्तुमात्रानुगतत्वान्न तत्रान्तरकारणकल्पनापि वर्तते । सन् सन् सन्निति स्फुरण-प्रतीत्यनुगमात् तत्रान्यदननुगमान्न द्वैतभेदभासोऽपीति भावः ॥ ४४ ॥

अस्तु नामात्मको भेदो ययोरैक्येन ग्रासितः ।
वन्दिते शिवशक्ती ते ज्ञानदेवो ब्रवीति वै ॥ ४५ ॥

पदार्थसहितोन्वयः—अस्तु ( इदं भवतु ) नामात्मकः भेदः ( केवलं नामरूपाभ्यां कृतो भेदः ) ययोः ( शिवशक्त्योः ) ऐक्येन ( एकरूपत्वेन ) ग्रासितः ( नाशितः ) ते शिवशक्ती ( एवंभूते शिवशक्ती ) वन्दिते ( नमिते ) ज्ञानदेवो ब्रवीति वै ( इति ज्ञानदेव आह ) ॥ ४५ ॥

विवरणम्ः—अहो नात्र कोऽपि वादावकाशो वर्तते । अत्र सत्स्फुरणनामभेदोऽपि नोत्पद्यते । एते स्वरूपत एवाद्वितत्वेन राजेते । एकस्मिन्नर्थे नामद्वयप्रतीतिस्तु घटकलशाविव वर्तते । यथा गुडे माधुर्यं वर्तते तत्तु गुडमात्रमेव । तथैव यच्चिन्मात्रं वर्तते तत्तु सन्मात्रमेव । यत्सन्मात्रं तत्तु चिन्मात्र-मेव । अत एव स्वसुखास्वादनेनैवैष भेदो वाङ्मात्रत एव प्रतीयते स्वरूपत एवमभेदरूपेण यत्सत्स्फुरणं वर्तते तदेवाहमिति निश्चय एव वंदनम् ॥ ४५ ॥

ययोरालिंगने लीनं द्वित्वं प्रातीतिकं तयोः ।
रजनी दृश्यरूपा या दृष्टिमात्रापि साखिला ॥ ४६ ॥

पदच्छेदः—ययोः आलिंगने । सा अखिला ॥ ४६ ॥

पदार्थसहितोन्वयः—ययोः आलिंगने ( ययोः शिवशक्त्योः परस्परप्रेमाश्लेषे ) तयोः प्रातीतिकं द्वित्वं लीनं ( तयोर्मध्ये यद्भासमानं द्वैतं तदपि नास्त्येव ) या दृश्यरूपा रजनी ( या दृश्यरूपेण प्रतीयमाना रात्रिः ) सा अखिला अपि दृष्टिमात्रा ( सा सर्वा केवलं द्रष्टुर्दृष्टिरेव न द्रष्टुर्भिन्ना ) ॥४६॥

विवरणम्—चिन्मात्रे विचारिते सति सन्मात्रात् पृथग् न किमप्युपलभ्यते । तथैव सन्मात्रमपि चैतन्यमात्रात् पृथग् न किमपि वर्तते । अत एष भेदस्तु वाचारंभणमात्र एव । एकस्मिन्नर्थे शब्दद्वयमेव प्रतीयते । तदप्याभासमात्रमेव । द्वैताभासे यदद्वैतं तदपि द्वैतमेव । यथा कल्पांबुधौ पूर्णापूर्णत्वप्रकारो न कोपि वक्तुं शक्यते । अधुना यः प्रपंचभासो भासते स एव निशात्वेन कल्पितः । प्रकाशस्वरूपे चिद्भास्कर एतत्सर्वं विलीयत एव । ज्ञप्तिमात्रात् पृथग् न किमपि दृश्यत इतिभावः । उत ज्ञानज्ञेयात्मकं सर्वं सन्मात्रत्वेनैव भासते न तत्र ज्ञानज्ञेयात्मकं किमपि दृश्यते प्रतीतिस्तु चिद्विलास एव । एवमग्रेपि विचारणीयम् ॥ ४६ ॥

ययोस्तु रूपनिर्धारे न परा नापि वैखरी ।
शक्ता प्रलयनीरे न सिंधुगंगादिकं यथा ॥ ४७ ॥

पदार्थसहितोन्वयः—ययोः तु रूपनिर्धारे ( ययोः शिवशक्त्योः रूपं किमात्मकमस्ति इति निश्चयार्थं प्रवृत्ता स्याद् ) परा न शक्ता वैखरी अपि न शक्ता ( परा न शक्ता कुतः वैखरी ) यथा प्रलयनीरे सिंधुगंगादिकं न ( महाप्रलयकालीने नीरे यथेदं सिंधूदकमिदं गंगोदकमिति निर्णेतुं न शक्यं तद्वत्स्वरूपमात्रे शिवरूपं शक्तिरूपं न निर्णीतं भवति ) ॥ ४७ ॥

विवरणम्—एवंप्रकारेण स्वरूपे निर्धारिते सति अत्र निश्चयोऽप्यनिश्चयभावं प्राप्नुयात्। कुतः। यतोऽत्र वाङ्मन आदि न किमपि वर्तते निश्चयादिकं सर्वं द्वैतावलंबनेनैव। नाद्वैतस्वरूपे निश्चयादिकं किमपि वर्तते। एतेन यत्परस्परं प्रति प्रतीतिहेतुभूतं वर्तते तदपि विलासमात्रमेवेति ज्ञेयम्। वस्तुगत्या स्वरूपमात्र एष विलासोऽपि न संभवति। यथा प्रलयोदके गंगासिंध्वादिकं न किमपि दृश्यते तथैवानंदस्वरूपे न सत्स्फुरणं किमप्यस्तीति भावः ॥ ४७ ॥

यथा वायुः स्ववेगेन नभःकुक्षौ विलीयते।<br>
यथा वा सप्रभो भानुर्लीनः प्रलयदीधितौ ॥ ४८ ॥<br>
द्रष्टृदृश्ये तथा लीने सम्यग्दर्शनतोऽनयोः।<br>
दम्पती सर्वभावेन वन्दितौ तौ मया पुनः ॥ ४९ ॥

पदच्छेदः—सुगमः ॥

पदार्थसहितोन्वयः—यथा वायुः स्ववेगेन नभःकुक्षौ विलीयते (यथा वायुर्गतिरपि आकाशे विलीयेते) वा यथा सप्रभः भानुः (अथवा यथा प्रकाशेन सहितो रविः) प्रलयदीधितौ लीनः (प्रलयप्रकाशे विलीयते) तथा अनयोः (तद्वदनयोः शिवशक्त्योः) सम्यग्दर्शनतः (यथार्थ स्वरूपज्ञानेन) द्रष्टृदृश्ये लीने (द्रष्टा च दृश्यं च लीने भवतः। अयं द्रष्टेदं दृश्यमित्यादिभेदो निर्मूलो भवति)। तौ दम्पती (एवंभूतौ प्रकृतिपुरुषौ) मया (ज्ञानदेवेन) सर्वभावेन (सर्वात्मना) पुनः वंदितौ (पुनर्नमितौ) ॥ ४८ ॥ ४९ ॥

विवरणम्—एषा जगत्प्रतीतिस्तु सत्स्फुरणमात्रैव । एतद्विचारेणैवानुभूयते । यथा वायौ निष्पंद-रूपे सत्याकाशात् पृथग् न किमपि प्रतीयते । यथा प्रलयाग्नौ प्रदीप्ते सति भानुः स्वप्रभया सह वर्तमानस्तत्रैव लीयते तथैवैतदनुभवसमुद्रे द्रष्टृदृश्यादिकं सर्वमपि लीयते । एतदेव स्वानुभूत्या वंदितं मया । ततो वन्दनेन सह वन्दकोऽपि नात्र प्रतीयते । एवंप्रकारेण भेदाभावमात्रेण प्रकृतिपुरुषयोर्वन्दनं युक्तमेव । अत्र यो वंद्यवंदकभाषणे भेदः प्रतीयते स स्वसुखानुभूतिमात्रः स्वरूपमात्र एव न अन्यत् किमपि वर्तते ॥ ४८ ॥ ४९ ॥

स्वरूपनिश्चयेनैव निश्चायकोऽपि विद्यते ।
अभावे निश्चितार्थस्य निश्चयोऽपि न सिध्यति ॥ ५० ॥

पदार्थसहितोन्वयः—स्वरूपनिश्चये ( स्वरूपस्य निश्चये कृते सति ) निश्चायकः अपि न एव विद्यते ( स्वरूपनिर्णयस्य कर्ता न कोप्यन्योऽस्ति स्वरूपमात्रत्वात् ) निश्चितार्थस्य अभावे ( यदि न कोऽपि निश्चितार्थः संभवति तर्हि ) निश्चयः अपि न सिध्यति ( कः कस्य निश्चयं कुर्याद् न कोऽपि निश्चयः संभवतीत्यर्थः ) ॥ ५० ॥

विवरणम्—नात्र द्वैतापत्तिर्वर्तते स्वरूपतः प्रत्ययमात्रत्वात् । प्रत्ययमात्रस्वरूपे न किमपि द्वैताद्वैतं वक्तुमुचितम् । वागविषयत्वाच्छब्दाद्यगोचरे स्वरूपेऽसच्छंका न कर्तव्या । अपि तु सत्सुख-मात्रमेव पूर्णत्वेन वर्तते । तस्याभावो न कोऽपि प्रकल्पितो भवेत् । अभावस्य साक्षित्वात् । साक्षित्वेऽपि ज्ञातृज्ञेयाविषयत्वात् । अविषयेऽपि ज्ञानमात्रत्वात् । यज्ज्ञानमात्रं तदेव सन्मात्रम् । एकस्मिन्नर्थे

द्विवचनप्रवृत्तिर्वर्तते सा तु स्वसुखास्वादनेनैव । सुखास्वादनमपि सुखमात्रत्वेनैव । अत एव स्वसुखास्वादनानुभूतिरपि नोत्पद्यते । वेदनमात्रत्वेन नात्रवेदनविषयत्वं कल्पितुं युक्तम् । निश्चलचिन्मात्रस्वरूपेंऽगांगिभावोऽपि न वर्तते । यत्स्वरूपं प्रकाशत्वमपि न गृह्णाति तत्र कुतोंऽगांगित्वं वर्तते । एवं पूर्वोक्तप्रकारेण भेदाभासेन विना स्वविलासेनैव वंद्यवंदकभावोऽपि नास्त्येव । एवमग्रेऽपि विचारणीयम् ॥ ५० ॥

अत्र नतिमिषेणैव भेदभावो भवेद्यदि ।
तर्हि तत्र मदन्यः को भेदहेतुर्भवेत्खलु ॥ ५१ ॥

पदच्छेदः—भवेत् यदि । मत् अन्यः । कः भेदहेतुः भवेत् ॥ अन्यः सुगमः ॥ ५१ ॥

पदार्थसहितोन्वयः—अत्र ( अस्मिन् वन्दनविषये ) नतिमिषेणैव ( केवलवंदननिमित्तेन ) यदि भेदभावः भवेत् तर्हि तत्र ( भेदविषये ) मदन्यः कः भेदहेतुः भवेत् खलु ( मत्तो द्वितीयो भेदस्य हेतुर्निश्चयेन कः स्यात् । न कोऽपि स्यात्। अतोत्र वन्दने मया न भेदभावेन वंदनं कृतमिति निष्कर्षः) ॥५१॥

विवरणम्—एतयोः सत्तास्फुरणमात्रयोः प्रकृतिपुरुषयोर्विश्वकारणभूतयोर्जननीजनकयोरभिवन्दनं मया यदुक्तं तत्त्वभेदेनैव । सन्मात्रोऽहं एवंप्रकारेण मया वंदितौ तौ । न तु भेदेन । यदि भेदेन मया वन्दनं कृतं स्यात्तर्हि मद्व्यतिरेकेणात्र सत्स्फुरणेऽद्वैतस्वरूपे न कोऽपि भेदको वर्तते ॥ ५१ ॥

अतोऽत्र न मया कश्चिद् भेदभावोहि निर्मितः ।
सेवेत भूषणं हेम तथैव मम वन्दनम् ॥ ५२ ॥

पदार्थसहितोन्वयः—अतः ( अस्मात् कारणात् ) अत्र ( अस्मिन् नमने ) मया कश्चिद् भेद-भावः न हि निर्मितः ( मया कोपि भेदो नैव कृतः ) भूषणं हेम सेवेत ( यथा सुवर्णभूषणं सुवर्णं भजते इत्युक्तिर्वाचारंभणमेव ) तथा एव मम वन्दनम् ( तत्प्रकारकमेवाभेदभागिदं मया कृतं वन्दनमस्ति ) ॥ ५२ ॥

विवरणम्ः—एवंप्रकारेण यत्सत्स्फुरणयोरैक्यं वर्तते तत्र नम्यनमकभावो न कोऽपि भेदेन भवितुमर्हति । तत्तु स्वरूपेणैव वर्तते । प्रत्ययमात्रस्वरूपे न प्रमेयप्रमात्रादिकं किमपि जायते । प्रत्यय-मात्रत्वात् सन्मात्रस्वरूपे कथं कर्तृत्वं भवेत् । प्रत्ययरूपेण प्रत्ययो वर्तते । तत्र न किमपि कर्तृत्वं स्यात् । प्रतीतिस्तु सुवर्णाद् भूषणमिवाभेदेनैव वर्तते । एवंप्रकारेण मया वन्दने कृतेऽपि न तत्र कर्तव्यकल्पनावकाशः ॥ ५२ ॥

वागिति वाचयोक्ते हि वाच्यवाचकयोर्यथा ।
नैव भेदो भवेत् क्वापि न नमने तथैव मे ॥ ५३ ॥

पदच्छेदः—वाक् इति वाचया उक्ते । अन्यः सुगमः ॥ ५३ ॥

पदार्थसहितोन्वयः—यथा वाक् इति वाचया उक्ते हि ( यथा वाग् इति शब्दे वाचयाऽप्युक्ते सति ) वाच्यवाचकयोः भेदः ( इयं वाचा वाचका । अयं वाक् शब्दो वाच्य इति परस्परस्य भेदः ) क्व अपि न एव भवेत् ( कुत्रापि न दृष्टः स्यात् । तयोरेकात्मकत्वात् ) तथा एव मे नमने न ( तद्वदेव यन्नमनं मया कृतं तत्रापि न कोऽपि भेदो वर्तते ) ॥ ५३ ॥

विवरणम्ः—यथा वाचा वाचेत्युक्तेऽपि न तत्र वाच्यवाचकत्वं भवति । एकस्मिन् वाचास्वरूपेऽपि यद्वाच्यवाचकत्वं प्रतीयते तत्तु भेदेन विनैव । तथा प्रत्ययमात्रे स्वरूपे प्रत्ययासद्भावेऽपि प्रमेयप्रमात्रादिकं स्वयमेवास्ति तथैव कृतेऽपि नमस्कारे नात्र भेदो भवेत् । अपित्वभेदेनैवासौ नमस्कारः । यत्कर्तृत्वेन विनैव नमनं भवति तत्र किमपि कर्तव्यं नास्त्येव । एवंप्रकारेण नमने कृतेऽपि न कृतेऽपि वा कर्तव्यं नास्त्येव । अत्र यो वन्दनाभाव आग्रहो वर्तते स मृषैव । अन्यथा तु स्वरूपमेव । तस्मात् कारणात् स्वस्य स्वानुभूतिर्या वर्तते तत्र न कोऽपि द्वैतावकाशः । विनैव द्वैतं भज्यभजकत्वमपि भवेदेव ॥ ५३ ॥

गंगासागरयोर्योगे तौ स्त्रीपुरुषनामतः ।
प्रतीयेते पृथक्त्वेन जलभेदो न विद्यते ॥ ५४ ॥

पदार्थसहितोन्वयः—गंगासागरयोः योगे ( गंगायाः सागरस्य च संयोगविषये ) तौ स्त्रीपुरुषनामतः पृथक्त्वेन प्रतीयेते ( तौ गंगासागरौ गंगा स्त्रीनाम्ना सागरः पुरुषनाम्नेति नाममात्रेण भिन्नौ भासेते ) जलभेदः न विद्यते ( परं जलत्वेन तयोर्न कोऽपि भेदो भवति । द्वावपि एकात्मकौ यथा तथा नम्यनमकौ न भिन्नावित्यर्थः ) ॥ ५४ ॥

विवरणम्ः—यथा स्त्रीपुरुषमिषेण गंगासागरयोर्भेदेपि न तत्र किमपि द्वैतं वर्तते । स्त्रीलिंगपुल्लिंगादिनामभेदेप्युदके न कोऽपि भेदो दृश्यते । गंगायाः सागरस्य चाभेदस्तु स्वभावेनैव । न तत्र कोऽपि प्रयत्नो वर्तते । तथैव ज्ञप्तिमात्रस्वरूपं यत्स्वसंवेद्यत्वं वर्तते तन्निमित्तकं नमनमप्यस्मदीयं भवेदेव ।

एवं स्वानुभवे जातेऽपि न किमपि प्रमातृत्वं प्रमेयत्वं वा भवेत् । एतत्प्रकारेणैव मम नमनमपि वर्तते । अग्रेप्येवमेव ॥ ५४ ॥

प्रभात्मके रवेरूपे भास्यभासककल्पना ॥
कदाचिन्नैव जातास्ति ममापि नमनं तथा ॥ ५५ ॥

पदच्छेदः—रवेः रूपे । कदाचित् न एव जाता अस्ति ॥ ५५ ॥

पदार्थसहितोन्वयः—प्रभात्मके रवेः रूपे ( केवलदीप्तिमात्रे रवेः रूपे ) कदाचित् ( कस्मिन्नपि काले ) भास्यभासककल्पना ( अयं रविर्भास्यः इयं तस्य दीप्तिस्तस्य भासकेत्यादि परस्परभासनस्य कल्पना ) न एव जाता अस्ति ( निश्चयेन नास्त्येव ) तथा मम नमनं अपि ( तथैव मया कृतं नमनं भेदकल्पनारहितं वर्तते ) ॥ ५५ ॥

विवरणम्—यथा सूर्ये प्रभाऽभेदेनैव वर्तते । प्रभानिमित्तेन सूर्ये कोऽपि भेदो न भवेदेव । उत सूर्ये स्वानुभवमात्रे स्वप्रभा न कथमपि प्रतिबन्धका भवति यन्निवारणेन स्वरूपं प्राप्येतैत्र । अत एव सूर्ये सति भास्यभासकभावेपि यथा स्वरूपेण स न भिद्येत तथैव नम्यनमकभावे न स्वरूपभेद इति भावः ॥ ५५ ॥

चन्द्रे चन्द्रकलातेजो विपुलत्वेन वर्तते ॥
दीपे दीप्तिर्यथा वास्ति तथैव मम वंदनम् ॥ ५६ ॥

पदच्छेदः—तेजः विपुलत्वेन दीप्तिः यथा वा अस्ति तथा एव ॥ ५६ ॥

पदार्थसहितोन्वयः—चंद्रे चंद्रकलातेजः ( चन्द्रे चंद्रस्य कलानां तेजो दीप्तिः ) विपुलत्वेन वर्तते ( यथा पुष्कलास्ति ) वा यथा दीपे दीप्तिरस्ति ( अथवा यथा दीपे प्रकाशोस्ति ) तथा एव मम वन्दनम् ( तेनैव प्रकारेण मम नमनमभेदरूपमेव ) ॥ ५ ॥

विवरणम्—उत यथा चन्द्रेऽतीवापूर्वसुशोभितत्वं वर्तते । तेन धवलप्रकाशेन चंद्रस्य कापि क्षतिर्न दृश्यते । तत्र चंद्रे यः प्रकाशो वर्तते स त्वभेदेनैव । अभेदे वर्तमानेपि भेदः प्रतीतिमात्र एव । तथैव नम्यनमकभावेऽपि न भेदो वर्तते । उत दीपे यथा दीप्तिर्वर्तते तथैव वन्दनमपि सत्स्फुरणस्वरूपे भवेदेव ॥ ५६ ॥

मुक्ताफलेप्यभेदेन भासुरत्वं भवेद्यथा ॥
शोभते चापि तत्तेन ममापि नमनं तथा ॥ ५७ ॥

पदच्छेदः—फले अपि अभेदेन भवेत् यथा च अपि मम अपि ।

पदार्थसहितोन्वयः—यथा मुक्ताफले भासुरत्वं अपि अभेदेन भवेत् । ( यथा मौक्तिकस्य दीप्तिमत्त्वं मौक्तिकेन सह भेदाभावेनैव वर्तते ) च तत् ( पुनः तन्मौक्तिकं ) तेन शोभते अपि ( तेन भासुरत्वेन खलु राजते ) तथा मम नमनं अपि (तेन प्रकारेण मम नमनमप्यभेदेनैव राजते ) ॥५७॥

विवरणम्—यथा मौक्तिके भासुरत्वं वर्तते । तेन मुक्ताफले भेदं विनैव सुशोभितत्वं वर्तते । तथैव स्वानुभवस्वरूपे यः स्वरूपानुभवो वर्तते स तु स्वरूपेणैव ज्ञायते । तेन ज्ञानेन न तत्र ज्ञातृज्ञानभाव उत्पद्यते । अनेनैव प्रकारेणास्मद्वंदनमपि भवेदेव ॥ ५७ ॥

ॐकारो न यथा मात्राभेदेन भिद्यतेऽथवा ।
रेखात्रयेण वर्णो णो नापीदं नमनं तथा ॥

पदच्छेदः—वर्णः णः न अपि इदं ॥ ५८ ॥

पदार्थसहितोन्वयः—यथा मात्राभेदेन ( यथा अकारादीनां तिसृणां मात्राणां भेदेन ) ॐकारः न भिद्यते ( ॐकारे न कोऽपि भेदो जायते । स एकरूप एव ) अथवा रेखात्रयेण णः वर्णः ( अथवा तिसृभिः रेखाभिः णवर्णो न भेदं भजते ) तथा इदं नमनं अपि न ( तेनैव प्रकारेणेदं मया कृतं नमनमपि नैव भिन्नं भवति ) ॥ ५८ ॥

विवरणम्—अकारादिमात्रात्रयेण यथा ॐकारे कोऽपि भेदो न भवति । उत रेखात्रयेण णकारे भेदोऽपि न भवेदेव । तथैव वेद्यवेदनादिना स्वरूपमपि न भिद्यते । आशंका । पूर्वोक्तेन भवदीय-निरूपणेन वदतोव्याघातः प्रतीयते । स्वरूपतो वेदनमात्रे स्वरूपे वेद्यवेदकत्वाभावेऽपि वेद्यवेदकत्वेन यद्वर्तनं स एव व्याघातः । उत्तरं । पूर्वोक्तार्थे व्याघातप्रतीतिस्तु भ्रमादेव । कथं चेत् । तर्हि शृणु । ज्ञप्तिमात्रस्वरूपे न कोऽपि ज्ञानाभावो वर्तते । स्वरूपतो यज्ज्ञानमात्रं वर्तते तद्विषय-विषयित्वाभावेऽपि सर्वथैव स्वसंवेद्यत्वेन वर्तत एव । स्वरूपे यत्स्वसंवेद्यत्वं वर्तते तदेवाभिवंदनं मम ज्ञातव्यम् । एवंभूते नमने न कोऽपि नम्यनमकभावो वर्तते । कृतेऽपि नमने स्वरूपं तु निर्विकार्येव । न तत्र कोऽपि न्यूनाधिकभावो वर्तते । एतदपि स्वरूपेणैव ज्ञायते । अत एव स्वरूपेणैव स्वोपलब्धिर्वर्तते । स्वयमेव स्वस्य सुशोभितत्वं भवेदेव । एवमग्रेपि विचारणीयम् ॥५८॥

अहो सागरकल्लोलाः शोभमानास्तु सर्वथा ।
यथैव भेदाभावेन तथैव मम वन्दनम् ॥ ५९ ॥

पदार्थसहितोन्वयः—अहो ! ( इत्याश्चर्ये ) यथा तु सागरकल्लोलाः ( यथा तु समद्रस्य तरंगाः ) सर्वथा ( सर्वैः प्रकारैः ) भेदाभावेन एव शोभमानाः ( विना भेदमेकेनोदकरूपेणैव राजन्ते ) तथा एव मम वन्दनम् ( तेन प्रकारेणैव मम वन्दनमभेदरूपं वर्तते ) ॥ ५९ ॥

विवरणम्:—स्वयमेव स्वास्तित्वेन वर्तते । तेन स्वास्तित्वमात्रेण नित्योपलब्धेप्युपलब्धिर्वर्तते । स्वात्मलाभे न कोऽपि द्वैतकल्पनावकाशः । यथोदकस्वरूप उदकाभावेन विनैव तरंगादि शोभायमानं दृश्यते । तरंगादिनः प्रतीतावपि जले न कापि भेदप्रतीतिर्वर्तते । जले भेदाभावेऽपि तरंगादीनां प्रतीतौ सत्यामतीव सुशोभितत्वं भवेदेव । उदकसद्भावे सति कल्लोलादिरूपेण स्वयमेव क्रीडति सति तत्र किमपि न्यूनत्वं न वर्तते । उत यथा राज्ञः स्वराजतेजसा स्वराज्ये वर्तमानेऽपि किं राजाभावो वर्तते । उतातीव सुशोभितत्वं भवति । एतद्विचारणीयम् । तथैवानुभवमात्रस्वरूपे स्वानुभवेन स्वसुखोपलब्धिर्वर्तते स्वसुखाभावो वा । एतदपि सूक्ष्मप्रज्ञैर्विचारयितुं उचितमेव । पूर्वोक्तप्रकारेण नम्यनमकभज्यभजकादिभेदाभावेपि परंपरानुवर्तनं भवेदेव । अहो । प्रत्युतानादिप्रचलितप्रवाहखण्डनेन भेदस्य तत्रैव निवास इति निश्चीयेत एव । न तत्रानुभववार्तापि वक्तुमुचिता । तस्मात्कारणात् स्वानुभवानुसारेण स्वसंवेद्यत्वे स्वीकृते यथा भेदः कोऽपि न भवति तथैव नम्यनमकभावेऽपि न भेदकल्पनावकाश इति ज्ञातव्यं । प्रकाशमाने स्वरूपभास्करे न कापि भेदतमःकल्पना भवतीति भावः॥५९॥

अतो विनापि भेदेन वन्दितौ तौ मया किल ।
भूतनाथो भवानी च सुखास्वादाय वै मम ॥ ६० ॥

पदार्थसहितोन्वयः—अतः ( अस्माद्धेतोः ) विना भेदेन अपि ( भेदमकृत्वापि ) तौ ( उपरि निर्दिष्टौ एकरूपात्मकौ ) भूतनाथः भवानी च ( शिवशक्ती ) मम सुखास्वादाय वै ( केवलमात्मानंदभोगाय ) मया किल वंदितौ ( मया निश्चयेन सद्रूपेणैव वंदितौ ) ॥ ६० ॥

विवरणम्—अत्र प्रकृतिपुरुषाभावेपि सुखानुभूतिर्वर्तते । तथैव वंदनमपि भवेदेव । यत्र स्वरूपतो न कोऽपि द्वैतसद्भावो वर्तते तत्र नमनमपि न पृथग्भवितुमर्हति । अत्र या परिच्छिन्नाभिमाननिवृत्तिस्तदेव वंदनमित्यभिप्रायः ॥ ६० ॥

प्रतिबिंबोऽपि बिंबः स्याद् दर्पणत्यागतो यथा ।
जलमेव तरंगो वा शांते वायौ नतिस्तथा ॥ ६१ ॥

पदार्थसहितोन्वयः—यथा दर्पणत्यागतः ( यथा दर्पणस्य त्यागेन ) प्रतिबिंबः अपि बिंबः स्यात् ( प्रतिबिंबोऽपि केवलं बिंब एव न ततः पृथक् ) वा ( अथवा ) वायौ शांते ( वायौ निवृत्ते सति ) तरंगः जलं एव ( पृथग् भासमानस्तरंगो जलरूपेण प्रतीयते ) तथा नतिः ( तेनैव प्रकारेण मम नमनमभिन्नमेव वर्तते ) ॥ ६१ ॥

विवरणम्—यथा दर्पणपरित्यागेन प्रतिबिंब एव बिंबत्वेन स्थास्यति तथैवाद्वयानन्देऽहं-प्रत्ययाभावादद्वैतसिद्धिर्भवेदेव । द्वैतप्रतीतिरेवात्र भेदनिमित्तं वर्तते । स्वरूपे तु न कोऽपि भेदकल्पनावकाशः । यथा घृते प्रतीतेष्वपि व्यक्तकणेषु न कोऽपि भेदो वक्तुं शक्यते । यथैकस्मिन् बिंबे बिंबप्रतिबिंबकल्पनायां दर्पण एव निमित्तं तत्त्यागे तु बिंबमात्रमेव । उत वायुस्फुरणे सति जले तरंगमालाकारत्वं प्रतीयते । स्थिरे वायौ जलमात्रमेवानुभूयते । तथैव भेदप्रतीतिमात्रेणात्र स्वसंवेद्यत्वमुच्यते न वस्तुतः । वस्तुतस्तु स्वरूपमेव । एतदेव मम वंदनमपि भवेदेव । न तु सन्मात्र-स्वरूपे विभागशून्ये किमपि वक्तुमुचितम् ॥ ६१ ॥

निद्रात्यागेन प्राप्तिः स्यादयत्नेनात्मनो यथा ।<br>अभावेन तथा बुद्ध्याः शिवशक्ती हि वंदितौ ॥ ६२ ॥

पदार्थसहितोन्वयः—यथा निद्रात्यागेन ( यथा निद्राया उत्थाय ) अयत्नेन ( अनायासेन ) आत्मनः प्राप्तिः स्यात् ( स्वरूपेणैव पुरुषो राजते स्वप्नादिप्रपंचं निराकृत्य इत्यर्थः ) तथा हि ( तेनैव प्रकारेण ) बुद्ध्या अभावे ( अहंबुद्धित्यागेन ) शिवशक्ती वंदितौ ( मया शिवशक्त्योः स्वरूपेणैव वंदनं कृतम् ) ॥ ६२ ॥

विवरणम्ः—स्वरूपे विकाराभावेऽपि स्वप्नद्रष्टा जीवो यथा नानारूपेण प्रतीयते । निद्राभावे चैकरूपेणैव राजते । जागर एक एव स्वप्नद्रष्टा वर्तते । स्वप्नरथगजपदात्यादिबहुसमुदायेन स एव प्रतीयते । प्रतीतिकालेऽपि तस्य स्वरूपे न कोऽपि विकारो भवति । यत्प्रतीयते तत्तु प्रतीतिमात्रमेव ।

निद्राभावप्रतीतेरप्यभाव इति सिद्धम् । तत्र जागरे स स्वप्नद्रष्टा नित्योपलब्धत्वेनैव वर्तते । न क्वापि यत्नतस्तस्य प्राप्तिरुच्यते । तथैव बुद्धिपरित्यागेन या स्वरूपतोऽभेदस्थितिर्वर्तते तदेव मम वन्दनम् । एवंप्रकारेण प्रकृतिपुरुषावभिमानत्यागमात्रेणैव मया वंदितौ । अत्र वंदनेऽहं वंदनकर्तेदं वंद्यवस्तु वेति भेदो न वर्तते । अपि तु स्वरूपमात्रमेवास्ति वंदनम् ॥ ६२ ॥

लवणत्वपरित्यागे सिंधुभावः प्रजायते ।
अहंभावपरित्यागाच्च शंभुरेव भवाम्यहम् ॥ ६३ ॥

पदार्थसहितोन्वयः—लवणत्वपरित्यागे ( लवणेन स्वलवणत्वे त्यक्ते सति ) सिंधुभावः प्रजायते ( सिंधुत्वमेव प्राप्यते ) अहंभावपरित्यागात् ( तथैवाऽहंकारस्य त्यागेन ) अहं शंभुः एव भवामि ( अहं केवलः परमात्मस्वरूपोऽस्मि ) ॥ ६३ ॥

विवरणम्ः—यथा सिंधुसुतया नाम सैंधवेन सिंधुप्राप्त्यर्थं स्वत्वपरित्याग एव कर्तव्यो न त्वन्यत् किंचित् । तथैवाहंपरित्यागेनैव नमनं मम । एतन्नमननिमित्तेनापि वस्त्वेव वस्तुत्वेन शोभते । एवमग्रेपि विचारणीयम् ॥ ६३ ॥

शिवशक्त्योरभिन्नत्वं तथैव प्रणतेर्मम ।
आकाशः कर्दलीगर्भे वाचारंभणमेव तत् ॥ ६४ ॥

पदार्थसहितोन्वयः—शिवशक्त्योः अभिन्नत्वं (यथा पूर्वोक्तप्रकारेण शिवस्य शक्तेश्चैकात्मकत्वमेव विद्यते) तथा एव मम प्रणतेः (तेनैव प्रकारेण मया कृतस्य नमनस्यापि ताभ्यां सहाभिन्नत्वमेव वर्तते। यथा शिवशक्ती केवलानंदमात्रे तथैव मम नमनमप्यानंदादभिन्नमेवेति निष्कर्षः) कर्दलीगर्भे (आकाशोऽस्तीति योक्तिः) तत् वाचारंभणमेव (सोक्तिः केवलं वाचारंभणमेव न सार्थप्रतिपादका। यतः कर्दलीगर्भाकाशं महाकाशादभिन्नमेव वर्तते तद्वदेवेदं मम वंदनमित्यर्थः)॥ ६४ ॥

विवरणम्ः—शिवशक्ती इत्यभिधानाभ्यां यथा तत्र न कोऽपि भेदो वर्तते। सत्स्फुरणं त्वेकमेवेति बहुषु स्थलेषूक्तम्। तथैव मम नमनमपि तौ प्रति तथैव भवेत्। सदेव चिन्मात्रत्वेन वर्तते। चिन्मात्रमेव सन्मात्रत्वेन वर्तते। नात्र काऽपि भेदप्रतीतिर्दृश्यते। अपि तु तयोः परस्परं प्रत्यभावोऽनुभूयते। यथा सन्मात्रप्रत्यये तु सन्मात्रमेवानुभूयते। तथैव चिन्मात्रप्रत्ययेन चिन्मात्रमेवानुभूयते। एवं पुराप्युक्तं मया। अस्तु। एतयोर्यः परस्परस्मिन् प्रवेशो वर्तते स तु रंभागर्भ इव ज्ञातव्यः। यथा रंभागर्भोक्तिरवकाश इत्युक्तिर्वै तत्तु पर्यायमात्रमेव वर्तते। उत वाग्विलासमात्रमुच्यते। तथैवैतयोः परस्परानुप्रवेशोऽप्युच्यत इति भावः। एतौ यत्परस्पराभेदरूपेण वर्तेते तत्तु वाङ्मात्रमेव। वस्तुतस्त्वभेदस्वरूपेऽभेदोक्तिरपि नोचिता। कुतो भेदः। तथैव मम वंदनमिति। एवं शाब्दिकावरणनिवृत्तिमात्रेणाद्वैतरूपेणैव यद्वर्तनं तदेव नमनमकृत्रिमं मम। नात्र कर्तृत्वकल्पनावकाशः। एवंप्रकारेणात्र प्रकृतिपुरुषयोर्जातेष्यभिवंदनेऽद्यपर्यंतं भेदावकाशो न कुत्रापि दृष्टः। अपि तु प्रकृतिपुरुषमिषेणाद्वयवस्त्वेव निरूपितम्। अतः स्वरूपं सच्चिदानन्दत्वेन वर्तते। तत्र प्रपंचाभावस्त्वनायासेनैवोपलभ्यते।

शिवशक्ती इत्यप्यत्र वाचारंभणमात्रमेव । न किमपि स्वरूपतः । स्वरूपं तु स्वरूपेणैव वर्तते तत्र तु न कापि कर्तव्यकल्पना भवेदेव । सिद्धस्वरूपे सत्स्फुरणं आरोपितं प्रकृतिपुरुषनामभ्यामद्वैतचिंतनमात्रमिति फलितार्थः । तेनाखण्डस्वरूपे नं कोऽपि भेदो भवेदेव । अहं तु सत्स्फुरणमात्र एव । एतन्निश्चयात्मकं मम वंदनं भवेत् । एवं प्रकारेणाद्यपर्यंतं शुद्धवस्तुनिरूपणं कृतम् । अग्रेपि श्रीगुरुनिरूपणेनापि शुद्धाद्वयवस्तुनिरूपणं भवेदेव । न कोऽपि भेदावकाशो वर्तते तत्र ॥ ६४ ॥

इति श्रीज्ञानदेवकृतामृतानुभवस्यसंस्कृतभाषांतरे प्रकृतिपुरुषस्तवनं नाम प्रथमं प्रकरणम् ॥

---

हरिः ॐ तत्सत् ॥

## ॥ प्रकरणं द्वितीयं प्रारभ्यते ॥

श्रीगणेशायनमः । ॐ परमात्मने नमः । श्रीज्ञानगुरवे नमः । अधुना श्रीगुरुस्वरूपेऽक्रियत्वेन नमनं वर्तते । चिन्मात्रत्वेन सन्मात्रत्वेन सुखमात्रत्वेन च शोभतेऽसौ श्रीगुरुः । स्वयं भेदरहितः सन्मात्रश्च सन्नपि स्वसंवेद्यत्वेन स्वस्मिन् भेदमिव प्रदर्शयति । प्रदर्शितेऽपि स्वस्मिन् भेदे न स्वयं भेदभाग् भवाति । एतस्यार्थस्य स्पष्टीकरणं पूर्वप्रकरणे मया यथामति कृतमस्ति । शुद्धे बुद्धे मुक्तस्वभावे स्वस्मिन् स्वयमेव प्रकाश्यप्रकाशकभावं विनैव राजते श्रीगुरुः । अत एव श्रीगुरुः स्वरूपलक्षणेन नम्यते । विनैव गुरुशिष्यादिभेदं स्वबोधमात्रेण सर्वदैव शोभतेऽसौ । गुरुगौरवन्यायेन

प्रबन्धरचनाप्यतिगौरवेण वर्तते । कुतः । आचार्यवान् पुरुषो वेदेत्येवं वेदैः प्रतिपादितं भवति । तथापि गुरुस्वरूपं वेदाविषयत्वेन वर्तते । अतः स्वरूपानुभवप्रकटीकरणमेव गुरुस्तवनं वर्तते । तद्विवरणे श्रोतृभिः सावधानं स्थातव्यम् ॥

उपायवनसौरभ्ये वसन्तवत् कृपाकरः ।
आज्ञामंगलसूत्रं वै यश्चामूर्तोऽपि मूर्तिमत् ॥ १ ॥

टीका—यत्र गुरुत्वलघुत्वादीनां स्पर्शो न वर्तते । यः स्वभावेन सुखस्वरूपः स्तव्यत्वे स्तुतत्वे च प्रदर्शितयोरपि तस्य स्वरूपभंगो न भवति । स्वानुभवार्थं साध्ये साधने च प्रदर्शितयोरपि तेन रूपेण स्वयमेव शोभते । अखण्डस्वभावेन यः सन्मात्रो नाल्पमपि खण्डितो भवति स एव साधनवने वसन्तवद् भवति । स एव सर्वत्र प्रेरकत्वेनाज्ञां कुरुते । अमूर्तोऽपि करुणाकरत्वेन मूर्त इव प्रतीयते । स्वानुभवे स्वरूपखण्डनं न किमपि भवति । यथा जलमेकं जलत्वेनैव वर्तते । स्वानुभवभोगे यद्यत्साधनं वर्तते तत्तदपि स्वयमेव प्रकाशयति । तत्र फलरूपेणापि स्वयमेव वर्तते । अत एवोपायवनोद्याने स्वयमेव वसंतरूपेण प्रविश्य फलसंमुखः सन् स्वकीयफलेन फलति । अत्र स्वयमेवोपायावसानत्वेनोपायो भवति । आत्मा तु सुखघनः पूर्वमेव सिद्धः । गुरुशिष्यत्वे-नैतदैक्यं तु स्वभावेन पूर्वमेव सिद्धम् । अत्रोपायस्तु निमित्तमात्रम् । तस्य निवृत्तिर्भवति । यथा सागरे प्रवृत्तायामपि नद्यां तयोः संगमो निमित्तमात्रं वर्तते जलत्वेन भेदः पुरापि नासीत् ॥ १ ॥

अविद्याप्रतिबन्धाच्च भवचक्रेण पीडितम् ।
कारुण्याज्जीवचैतन्यं यो मोचयति दुःखतः ॥ २ ॥
मायानागं विदार्याथाशयति मुक्तिमौक्तिकम् ।
सद्गुरुं हरिरूपं तं निवृत्त्याख्यं नमाम्यहम् ॥ ३ ॥

पदार्थसहितोन्वयः—अविद्याप्रतिबन्धात् ( अविद्यारूपप्रतिबन्धेन बद्धत्वात् ) च ( पुनः ) भवचक्रेण पीडितं ( जन्ममरणादिना दुःखितं ) जीवचैतन्यं ( अविद्योपाधिकं चैतन्यं ) यः ( श्रीगुरुः ) कारुण्यात् ( कृपामात्रेणैव ) दुःखतः ) जन्मादिक्लेशात् ) मोचयति ( निवर्तयति ) ॥२॥ मायानागं ( मायाख्यकरिणम् ) विदार्य ( विनाश्य ) अथ ( तदनंतरम् ) मुक्तिमौक्तिकं ( मुक्त्याख्यमौक्तिकम् ) आशयति ( भोजयति ) तं ( सद्गुरुं ) हरिरूपं ( सिंहरूपम् ) निवृत्त्याख्यं ( निवृत्तिनाम्ना प्रसिद्धं ) अहं नमामि ( तेन सहाभेदरूपेण तिष्ठामीत्यर्थः ) ॥ ३ ॥

यस्येषदीक्षणेनापि बन्धमोक्षौ मृगांबुवत् ।
ज्ञात्वा द्रष्टा स्वद्रष्टृत्वमायात्यस्य प्रसादतः ॥ ४ ॥



पदार्थसहितोन्वयः—यस्य ( श्रीगुरोः ) ईषदीक्षणेन ( स्वल्पमात्रावलोकनेन ) अपि ( इति निश्चयेन ) बन्धमोक्षौ ( बन्धो देहात्मबुद्धिरूपो मोक्षो ब्रह्मात्मैक्यप्रत्ययरूपः ) मृगांबुवत् ( मृगजल

मिव मृषा ) ज्ञात्वा ( अपरोक्षीकृत्य ) द्रष्टा ( दृश्यदर्शनशून्यः ) द्रष्टृत्वं ( निरपेक्षदृष्टिरूपं ) । यस्य ( श्रीगुरोः ) प्रसादतः आयाति ( प्राप्नोति ) ॥ ४ ॥

कैवल्यकनकदानाय न जानाति लघुं गुरुम् ।
स्वरूपबोधे कुशलो निरपेक्षः स वर्तते ॥ ५ ॥

पदा०ऽन्व०—कैवल्यकनकदानाय ( निर्गुणस्वरूपसुवर्णदानाय बोधन इति यावत् ) लघुं गुरुं ( अधिकारभेदं ) न जानाति ( न विचारयति ) स्वरूपबोधे ( ब्रह्मात्मैक्यबोधे ) कुशलः ( पटुः ) निरपेक्षः ( इतरनिरपेक्षयैव ) वर्तते ( राजते ) ॥ ५ ॥

स्वस्य पौरुषयोगेन शिवदर्पं हरत्यसौ ।
दर्शनार्थं स्वरूपस्य दर्पणः केवलो हि सः ॥ ६ ॥

प०ऽन्व०—असौ ( श्रीगुरुः ) स्वस्य पौरुषयोगेन ( स्वसामर्थ्येनैव ) शिवदर्पं ( ईश्वरस्याप्यभिमानं ) हरति ( नाशयति ) स्वरूपस्य दर्शनार्थं ( स्वस्वरूपसाक्षात्कारार्थं ) सः ( श्रीगुरुः ) हि ( इति निश्चयेन ) केवलः ( शुद्धः ) दर्पणः ( आदर्शः एव ) ॥ ६ ॥

बोधचंद्रकला या त्वपूर्णेव हि विकाशते ।
यत्कृपामृतमात्रेण पूर्णत्वेन प्रकाशते ॥ ७ ॥

प०ऽन्व०—बोधचंद्रकला ( बोध एव चंद्रः बोधचन्द्रः । तस्य या कला ) तु अपूर्णा इव ( पूर्णा सत्यपूर्णेव ) विकाशते ( भासते ) । सा यत्कृपामृतमात्रेण ( यस्य श्रीगुरोः कृपामृतमात्रेण ) पूर्णत्वेन ( परिपूर्णा सती ) प्रकाशते ( अनुभूयते ) ॥ ७ ॥

यस्य दर्शनमात्रेण साधनेप्सा हि शाम्यति ।
कर्मकर्दंबकावेरी यस्मिन्नब्धौ विलीयते ॥ ८ ॥

पदार्थसहितोन्वयः—यस्य ( श्रीगुरोः ) दर्शनमात्रेण ( अवलोकनमात्रेण ) साधनेप्सा ( साधनेच्छाप्रवृत्तिरूपः प्रवाहः ) शाम्यति ( निवर्तते ) कर्मकर्दंबः ( कर्मसमूहः ) स एव कावेरी गंगा यस्मिन्नब्धौ ( यत्स्वरूपसागरे ) विलीयते ( विशेषेण लीयते ) ॥ ८ ॥

यस्यादर्शनमात्रेण द्रष्टा दृश्यत्वमाप्नुयात् ।
कौतुकं दर्शनस्यास्य नानात्वं याति नास्तिताम् ॥ ९ ॥

पदार्थसहितोन्वयः—यस्य ( श्रीगुरोः ) अदर्शनमात्रेण ( अनपरोक्षीकरणेन ) द्रष्टा ( साक्षी ) दृश्यत्वं ( अहंकारादिदेहांतभावं ) आप्नुयात् ( प्राप्त इव प्रतीयते भ्रांत्या ) अस्य ( श्रीगुरोः ) दर्शनस्य कौतुकं ( दर्शनकौशल्यमेतदेव वर्तते यन्नानात्वं द्रष्टृदृश्यरूपं ) नास्तितां याति ( अत्यन्ताभावमाप्नोति ) ॥ ९ ॥

यच्छीतलप्रसादार्को द्रष्टृज्ञाननिशां खलु ।
सुबोधसुदिनं कृत्वा कृतिभावं हरत्यसौ ॥ १० ॥

पदार्थसहितोन्वयः---यच्छीतलप्रसादार्कः ( यस्य श्रीगुरोः कृपाख्यः शांतो बालसूर्यः ) कृतिभावं ( अज्ञानकल्पितकर्तव्यसद्भावं ) सुबोध एव सुदिनं तत्कृत्वा द्रष्टृज्ञाननिशां ( साक्षिणोऽज्ञानरूपां रात्रिं ) खलु ( निश्चयेन ) हरत्यसौ ( अज्ञानं तत्कार्यं च विनाशयति ) ॥ १० ॥

यत्कृपाजलयोगेन जीवो भवति निर्मलः ।
यस्य शिवत्वस्पर्शोऽप्यसह्यो भवति सर्वथा ॥ ११ ॥

पदार्थसहितोन्वयः—यत्कृपेत्यादि ( यस्य श्रीगुरोः कृपाजीवनेन स्वयोगेन ) दृश्यं जीवयतीति जीवः निर्मलः ( अज्ञानतत्कार्यमलशून्यः ) भवति । यस्य ( शुद्धस्य साक्षिणः ) शिवत्वस्य ( ईश्वरत्वस्यापि ) स्पर्शः असह्यो भवति ( ईश्वरत्वारोपोऽपि येन न सह्यते ) ॥ ११ ॥

शिष्यहानिः प्रबोधे स्याद्गुरुत्वमपि हीयते ।
तथापि न गुरुत्वं तं स्वीयं त्यजति कर्हिचित् ॥ १२ ॥

पदार्थसहितोन्वयः--प्रबोधे ( स्वरूपजागृतौ सत्यां ) शिष्यहानिः ( शिष्यस्य अत्यंताभावः )

स्यात् । तदा तत्सापेक्षं प्रतीयमानं गुरुत्वं ( गुरुस्वरूपमपि ) हीयते ( नष्टं भवति ) तथापि स्वीयं गुरुत्वं ( श्रीगुरोः स्वरूपे यच्छ्रेष्ठत्वं तत् ) तं ( श्रीगुरुं ) कर्हिचित् न त्यजति ॥ १२ ॥

समाधानाय नैकत्वं गुरुशिष्यमिषेण हि ।
स्वसंवेदनलीलां स्वाद्वैतत्वेन करोत्यसौ ॥ १३ ॥

पदार्थसहितोन्वयः—एकत्वं समाधानाय ( चित्तविश्रांतये ) न भवति । अत एव गुरुशिष्य-मिषेण असौ ( श्रीगुरुः ) स्वाद्वैतत्वेन ( स्वस्य द्वैतसंबंधं विनैव । ) स्वसंवेदनलीलां ( स्वस्य स्वेन यद्वेदनं सैव लीला तां ) हि ( निश्चयेन ) करोति ॥ १३ ॥

यत्कृपासीकरेणाप्यविद्यारोगश्च शाम्यति ।
प्रबोधारोग्यरूपेण शोभतेऽसौ निरंतरम् ॥ १४ ॥

पदार्थसहितोन्वयः—यत्कृपेत्यादि ( यस्य श्रीगुरोः कृपातुषारमात्रेण ) अविद्यारोगश्च ( अवि-द्या तत्कार्याध्यासश्च तावेव रोगः ) स शाम्यति । प्रबोधेत्यादि ( स्वस्वरूपबोधरूपेण आरोग्येण ) असौ ( अधिकारी ) निरंतरं शोभते ॥ १४ ॥

दृश्यालिंगनमात्रेण द्रष्टाप्यत्र विलीयते ।
उच्छिष्टा तु गुरोर्दृष्टिर्न कदापि भविष्यति ॥ १५ ॥

पदार्थसहितोऽन्वयः—दृश्यालिंगनमात्रेण ( दृश्यभावे स्वस्मिन् विलीने कृते सति ) अत्र ( स्वस्वरूपविचारे ) द्रष्टापि विलीयते ( दृश्यसापेक्षत्वेन यद्द्रष्टृत्वं प्रतीयते तदपि दृश्याभावाद् विलीयत एव ) तथापि गुरोर्दृष्टिः ( श्रीगुरुस्वरूपज्ञानं ) कदापि उच्छिष्टा ( अशुचि ) न भवति ॥ १५ ॥

यस्य कृपावलोकेन ब्रह्म जीवेन भूयते ।
यस्यौदासीन्यमात्रेण ब्रह्म तुच्छं तृणादपि ॥ १६ ॥

पदार्थसहितोऽन्वयः—यस्य श्रीगुरोः । कृपावलोकेन । जीवेन ( देहावलंबनेन स्वजीवनं करोति यः तेन ) ब्रह्म भूयते ( स स्वयं ब्रह्मैव भवति ) यस्यौदासीन्यमात्रेण ( यस्योपरतत्वेन ) बृहद्रूपं ब्रह्मापि तृणात्तुच्छतरं भवति ॥ १६ ॥

यस्योपास्त्या मुमुक्षुस्तु स्वरूपं सिद्धमाप्नुयात् ।
यदाज्ञायां च कौशल्यं सफलं सर्वसाधनम् ॥ १७ ॥

पदार्थसहितोऽन्वयः—यस्य ( श्रीगुरोः ) उपास्त्या ( सेवया ) मुमुक्षुः स्वतः सिद्धं स्वरूपं आप्नुयात् । यदेत्यादि ( यस्य श्रीगुरोराज्ञायामेतादृशं कुशलत्वं वर्तते यत्सर्वसाधनसमुदायः सफलो भवति ) ॥ १७ ॥

न वेदकाननं यावत् दृग्वसंतोऽस्य वै विशेत् ।
तावत्फलं न प्राप्येत यत्नानंत्ये कृतेऽपि च ॥ १८ ॥

पदार्थसहितोन्वयः—यावदस्य ( श्रीगुरोः ) दृग्वसंतः ( कृपादृष्टिरूपो वसंतऋतुः वेदकाननं न विशेत् । तावादित्यादि ( अनन्तेष्वपि यत्नेषु कृतेषु सत्सु फलसिद्धिर्न स्यात् ) ॥ १८ ॥

यथार्थवस्तुबोधेन दृश्यद्रष्ट्रादिनाशनम् ।
योऽसौ गुरुः शूरतमो तन्नाशेन न मोदते ॥ १९ ॥

पदार्थसहितोन्वयः—यथार्थेत्यादि ( सम्यक्स्वरूपबोधेन दृश्यद्रष्ट्रादिकल्पनानाशे निश्चयेन ) शूरतमो गुरुः यः असौ न मोदते यतः सा कल्पना पुरापि नासीत् । कुतस्तर्हि तस्या नाशः ॥ १९ ॥

शिष्यलघुत्वमात्रेण गुरुत्वेन हि शोभते ।
विलासोऽभावनाशोऽसौ सोऽपि द्वैतं न बाधते ॥ २० ॥

प०ऽन्व०—शिष्येत्यादि ( शिष्येऽविद्याकल्पितलघुत्वनिमित्तेन श्रीगुरुर्गुरुत्वेन शोभते । ) असौ अभावनाशः ( अविद्यातत्कार्ययोरत्यन्ताभावस्य नाशः ) विलासः ( केवलं विनोदः ) सोपीत्यादि ( स मिथ्याभूतो विलासोऽपि वास्तवस्वरूपं न विकरोति ॥ २० ॥

असन्मृगांबुधौ यद्वन्मज्जनं तरणं तथा ।
तरणे पौरुषं यस्य पुरुषार्थी न चैव सः ॥ २१ ॥

प०ऽन्व०—असदित्यादि ( मिथ्याभूते मृगजलसमुद्रे यथा निमज्जनं मिथ्याभूतं तथा तस्मात्तरणमपि तथैव ) तरण इत्यादि ( यः पुरुषो मृगजलसमुद्रं तीर्त्वा पुरुषार्थी भवति तस्य तत्पौरुषं मृषार्थकमेव ) ॥ २१ ॥

न निरवयवाकाशो भूतवज्जानिमात्रतः ।
तथा नैव चिदाकाशः स्वरूपेण प्रकाशते ॥ २२ ॥

पदार्थसहितोऽन्वयः—निरवयवः ( अवयवशून्यः ) आकाशः भवितुं नार्हति भूतवज्जन्यत्वात् । यन्नैवं तन्नैवं यथा ब्रह्मेति । तथेत्यादि ( चिदाकाशो भूताकाशवन्निश्चयेन न वर्तते ) अयं स्वरूपेण ( नित्यशुद्धबुद्धमुक्तस्वभावेन ) प्रकाशते ॥ २२ ॥

चंद्रमसि सुशांतत्वं रवौ या च प्रकाशता ।
आत्मप्रभैव सा सर्वा गुरुरात्मा हि केवलः ॥ २३ ॥

पदार्थसहितोऽन्वयः—चंद्रमसीति । चंद्रस्य शीतलं तेजः सूर्यस्य च प्रखरं तेजः इत्येतत्सर्वं स्वात्मतेज एव । केवलः ( शुद्धः ) आत्मा हि निश्चयेन गुरुः ( गुरुशब्देन कथ्यते ) ॥ २३ ॥

यत्तु शिवे शिवत्वं तज्जीवत्वस्पर्शदूषितम् ।
स्वरूपारामलाभार्थं सोप्याश्रयति सद्गुरुम् ॥ २४ ॥

पदार्थसहितोन्वयः——शिवे ( ईश्वरे ) यत् शिवत्वं ( ईश्वरत्वं ) तत् । जीवत्वस्पर्शदूषितं ( जीवसापेक्षत्वदोषदूषितं ) स्वरूपारामलाभार्थं ( निजविश्रांतिप्राप्त्यर्थं ) सद्गुरुम् आश्रयति ॥ २४ ॥

प्रकाशेन नभो व्याप्तं प्रकाशेंदू पृथङ्ग न च ।
नेंदुत्वं हीयते तेन विशेषेण हि राजते ॥ २५ ॥

पदार्थसहितोन्वयः——नभ इत्यादि ( आकाशमिंदोः प्रकाशेन व्याप्तं भवति तथापींदुः प्रकाशश्चो-भावप्येकरूपेणैव वर्तेते ) नेन्दुत्वमित्यादि ( तेन प्रकाशेन चंद्रत्वं न नश्यति अपि तु निश्चयेन विशे-षेण राजते ) ॥ २५ ॥

प्रकटः सन्नपि योऽदृश्यः प्रकाशो न प्रकाशते ।
विभोरपि हि भावोऽस्य न दृष्टोऽन्येन कुत्रचित् ॥ २६ ॥

पदार्थसहितोन्वयः—प्रकटः ( अपरोक्षः ) सन्नपि योऽदृश्यः ( यो घटादिवत् प्रत्यक्षतया ) न भासते ( प्रकाशस्वरूपोऽपि सन् न तमोविरोधिदीपादिवत् प्रकाशते ) विभोरित्यादि ( व्यापक-स्याप्यस्य भावः केनाप्यन्येन पृथक्त्वाभावात् कुत्रचिन्न दृष्टः ) ॥ २६ ॥

चिन्मात्राखण्डरूपो यो नानुमेयश्च शब्दतः ।
प्रमाणमप्रमाणं तु तस्य दर्पं हरत्यसौ ॥ २७ ॥

पदार्थसहितोन्वयः—यः ( परमात्मा ) चिन्मात्रः ( ज्ञानस्वरूपः ) अखण्डरूपः ( देशकालवस्तुपरिच्छेदशून्यः ) शब्दतः ( शाब्दिकप्रमया ) अनुमेयः न ( प्रमातुं योग्यो न भवति ) प्रमाणेत्यादि ( अत्र परमात्मसाक्षात्कारे प्रमाणमप्रमाणं भवति ) तु ( पुनः ) असौ ( परमात्मा ) तस्य ( प्रमाणस्य ) दर्पं हरति । प्रमेयप्रकाश्यं यत् प्रमाणं तत् प्रमेयस्य प्रकाशनेऽसमर्थमेवेति भावः ॥ २७ ॥

प्रख्याता शब्दक्लृप्तिर्या तन्मौनं गुरुविग्रहे ।
द्वैतसापेक्षमेकत्वं यत्तत्तस्मै न रोचते ॥ २८ ॥

पदार्थसहितोन्वयः—प्रख्यातेत्यादि ( या प्रसिद्धा शब्दरचना सा श्रीगुरुस्वरूपे मौनप्राया ) द्वैतेत्यादि ( यदेकत्वं द्वैतसापेक्षं वर्तते तत् तस्मै परमात्मने न रोचते ) ॥ २८ ॥

प्रमाणे नष्टयत्ने तु प्रमेयं च प्रकाशते ।
अस्तित्वमस्य नो दृश्यं भवत्याश्चर्यमेव तत् ॥ २९ ॥



पदार्थसहितोन्वयः—प्रमाणेत्यादि ( प्रमेयप्रकाशने प्रमाणस्य प्रयत्ने निष्फले जाते सति

प्रमेयं त्वरूपेणैव प्रकाशते ) अस्तित्वेत्यादि ( अस्य प्रमेयस्यास्तित्वं दृश्यं न भवति दृष्टेरविषय-त्वात् ) ॥ २९ ॥

कदाचिद्यदि द्रष्टासौ स्वरूपस्य भवेत्खलु ।
द्रष्टृत्वं तत्र न स्पृष्टं प्रत्ययस्तु विधीयते ॥ ३० ॥

पदार्थसहितोन्वयः—कदाचिदित्यादि ( यदि कदाचिदसौ द्रष्टा स्यात् ) तर्हि खलु ( निश्चयेन ) स्वरूपस्यैव । तेन निर्विकारे स्वरूपे कर्तृकर्मविरोधः स्यात् । तस्मात् तत्र ( स्वरूपे ) द्रष्टृत्वं न स्पृशति । किंतु स्वानुभवमात्रेणैवास्ते ॥ ३० ॥

स्तुतिः स्तोत्रं नतिर्वापि गतिं प्राप्नोति यत्र न ।
अस्मिन्निवृत्तिनामापि यथार्थत्वेन लीयते ॥ ३१ ॥

पदार्थसहितोन्वयः—यत्र ( यस्मिन् श्रीगुरुस्वरूपे ) नतिः ( अभिवन्दनं ) स्तुतिः ( गुणानु-वादः ) स्तोत्रं ( नामसंकीर्तनं ) वापि । गतिं न प्राप्नोति ( प्रवेशं न करोति ) अस्मिन् ( चिन्मात्र-स्वरूपे ) निवृत्तिरिति नामापि यथार्थत्वेन ( परमार्थदृष्ट्या ) लीयते ॥ ३१ ॥

आत्मरूपे प्रवृत्तिर्न निवृत्तिस्तत्र कीदृशी ।
सदानन्दमयी मूर्तिर्निर्द्वंद्वत्वेन शोभते ॥ ३२ ॥

पदार्थसहितोन्वयः——आत्मरूपे ( प्रत्यगात्मनि ) शब्दादिप्रवृत्तिर्न संभवति । तत्र निवृत्तिः कीदृशी ( निषेधः किमात्मको भवेत् ) विधिनिषेधादि शब्दाभावेऽपि न स्वस्याभावः कल्पितुं शक्य इत्युक्तं सदेति । सदानन्दस्वरूपा मूर्तिः ( अभिव्यक्तिः ) निर्द्वंद्वत्वेन ( द्वैताभावेन ) राजते ॥ ३१ ॥

निवर्त्यं न किमप्यस्ति निवारयति तत्र किम् ।
कथं निवृत्तिनाम्ना तु प्रसिद्धोऽसि हि भूतले ॥ ३३ ॥

पदार्थसहितोन्वयः——निवर्त्येत्यादि ( निवारणार्हं न किमपि विद्यते ) तत्र ( निवर्तस्याभावे ) किं निवारयसि । न किमपीत्यर्थः । तथापि लोके निवृत्तिनाम्ना तव प्रसिद्धिरस्ति तत्कथं संभवति ॥ ३३॥

तमोभास्करसंयोगो भवेदेव न कर्हिचित् ।
तमोरिरिति नाम्ना तु प्रसिद्धोऽस्ति रविः खलु ॥ ३४ ॥

पदार्थसवितोन्वयः——तम इत्यादि ( अंधकारस्य सूर्यस्य च परस्परसंयोगः कदापि नैव भवेत् । तथापि सूर्यस्तमोरिरिति नाम्ना खलु प्रसिद्धोऽस्ति ) ॥ ३४ ॥

आत्माऽजडस्वरूपस्तु जडभासविलासकः ।
दुर्विज्ञेयैवास्य मायाऽशक्यं सर्वं करोत्यसौ ॥ ३५ ॥

पदार्थसहितोन्वयः—आत्मा ( प्रत्यगात्मा ) अजडस्वरूपः ( ज्ञानस्वरूपोऽस्ति ) जडभासः ( भूतभौतिकदृश्यप्रपंचः ) तस्य विलासोऽस्ति । अस्य ( परमात्मनः ) माया ( अघटितघटनापटीयसी शक्तिः ) दुर्विज्ञेयैव ( दुःखेनापि ज्ञातुमशक्या भवति ) असौ ( माया ) अशक्यमपि सर्वं लीलयैव करोति ॥ ३५ ॥

यद्यद्दर्शयसि त्वं भोस्तत्तत्त्वं नासि गोचरम् ।
अमायिकस्वरूपस्तु ज्ञेयो भवसि नैव च ॥ ३६ ॥

पदार्थसहितोन्वयः—भोः ( स्वामिन् ) यद्यत्त्वं दर्शयसि तत्तद्गोचरमस्ति । त्वं तन्नासि । त्वं त्वगोचरः सन् अमायिकस्वरूपः ( शुद्धस्वरूपः ) ज्ञेयः ( ज्ञानविषयः ) न भवसि ॥ ३६ ॥

सर्वाश्चर्यमय स्वामिन् गूढरूप विभो प्रभो ।
निर्धारे लज्जितोधीमांस्त्वद्रूपस्य भविष्यति ॥ ३७ ॥

पदार्थसहितोन्वयः—भोः स्वामिन् भवान् सर्वाश्चर्यमयो गूढरूपो विभुः प्रभुरपि स्वयमेव भवितुमर्हति । भवत्स्वरूपस्य निर्धारं कर्तुं धीमानपि लज्जित एव भविष्यति “ चकितमपि धत्ते श्रुतिरपि ” इतिस्मृतेः ॥ ३७ ॥

नामरूपात्मकं विश्वं कल्पितं हि निवार्यते ।
नैव तत्र हि त्वत्तोषः स्वरूपेण तु तुष्यसि ॥ ३८ ॥

पदार्थसहितोन्वयः——नामरूपेत्यादि । भवता कल्पितं नामरूपात्मकं विश्वं निवार्यते । तत्र हि ( तेन निवारणेन ) त्वत्तोषो न भवति । त्वं स्वस्वरूपेणैव संतुष्टोऽसि ॥ ३८ ॥

जीवत्वं बाधयित्वा न शिवत्वं प्राप्यते त्वया ।
भृत्यो भवति स्वामीति कल्पना त्वयि नास्ति भोः ॥ ३९ ॥

पदार्थसहितोन्वयः—भोः ( प्रभो ) जीवत्वं बाधयित्वा ( कल्पितजीवनिषेधेन ) यच्छिवत्वं प्राप्यते तत्तु सापेक्षत्वेनाल्पमेवास्ति तत्त्वया न प्राप्यते । भृत्यः ( उपासकः ) स्वामी ( उपास्यः ) भवतीत्येषा कल्पनापि त्वयि न संभवति । सर्वनिषेधावधिभूतोऽस्तिमात्रतया स्थातुमर्हसि ॥ ३९ ॥



शिवजीवत्वसापेक्षमात्मत्वं त्वयि नास्ति वै ।
बहुनात्र किमुक्तेन ह्युल्लेखो नैव विद्यते ॥ ४० ॥

श्री लक्ष्मीधर-विद्यामन्दिर देवप्रयाग ( गढ़वाल-हिमालय ) व्यवस्थापक-पं० चक्रधर जोशी

पदार्थसहितोन्वयः——भोः प्रभो भवत्स्वरूपे जीवत्वसापेक्षः शिवत्वस्वीकारो यदि भवेत्तर्हि भवत्स्वरूपाभाव एव स्यात् । अत एव भवतः सापेक्षं शिवत्वं न संभवति । अत्र ( स्वरूपनिर्णये ) बहुनोक्तेन किम् । भवत्स्वरूपे नोल्लेखमात्रोऽपि संभवति ॥ ४० ॥

॥ ५५ ॥

सूर्ये न हि यथा रात्रिरुदधौ लवणं न वा ।
जाग्रतोपि च निद्रा न नान्यभावस्तथा त्वयि ॥ ४१ ॥

पदार्थसहितोन्वयः—यथा सूर्ये रात्रिः समुद्रे सैंधवं जाग्रतः पुरुषस्य वा निद्रा नैवाऽस्ति तथा त्वय्यपि द्वैतभावो न विद्यते ॥ ४१ ॥

कर्पूरं हि यथा दग्ध्वा स्वयमग्निर्विलीयते ।
आत्मबोधस्तथा चान्यभावं हत्वा विशाम्यति ॥ ४२ ॥

पदार्थसहितोन्वयः—यथाऽग्निः कर्पूरं दग्ध्वा स्वयमपि विलीनो भवति तथाऽत्मबोधेऽन्यभावं ( द्वैतभावं ) हत्वा ( विनाश्य ) स्वयमपि विशाम्यति ॥ ४२ ॥

प्रार्थितोऽपि स्तुतिस्तोत्रैर्नासौ वंद्यो भविष्यति ।
कर्हिचिद्भेदवार्तां तु सहते नैव निर्मलः ॥ ४३ ॥

पदार्थसहितोन्वयः—स्तुतिभिः स्तोत्रैश्च प्रार्थितोऽप्यसौ ( श्रीगुरुः ) वन्द्यो ( वन्दनविषयो ) न भविष्यति । निर्मलः ( अविद्यातत्कार्यमलशून्यः ) सन् स कदापि भेदवार्तां ( द्वैतभाषां ) नैव सहते ॥ ४३ ॥

नित्योदितो यथा सूर्यः स्वोदयं कुरुते न हि ।
वन्द्यभावं तथासौ च स्वीकरोति कदापि न ॥ ४४ ॥

पदार्थसहितोन्वयः—यथा सूर्यो नित्योदितः ( नित्यं उदयरूपः ) सन् स्वोदयं न कुरुते तथाऽसौ ( श्रीगुरुः ) कदापि वन्द्यत्वं न स्वीकरोति ॥ ४४ ॥

स्वसंमुखो यथा कोऽपि शक्नोति भवितुं न हि ।
तथाऽसौ वंद्यभावं तु निर्मूलयति केवलः ॥ ४५ ॥

पदार्थसहितोन्वयः—यथा दर्पणं विना स्वस्य संमुखता न शक्या तथाऽसौ ( श्रीगुरुरपि ) केवलः ( द्वैतसंबन्धरहितः ) सन् द्वैतसापेक्षं वंद्यत्वं निर्मूलं करोति ॥ ४५ ॥

प्रतिबिम्बो यथाकाशदर्पणे नैव विद्यते ।
चिदाकाशस्वरूपोऽपि नासौ गृह्णाति वन्दनम् ॥ ४६ ॥

पदार्थसहितोन्वयः—आकाशदर्पणे प्रतिबिंबो नास्त्येव । तथाऽसौ ( श्रीगुरुरपि ) चिदाकाशस्वरूपः ( ज्ञानघनः ) सन् वन्दनं न गृह्णाति ( वन्दनायावकाशं न ददाति ) ॥ ४६ ॥

एवं वन्द्यो न चैवासौ किमर्थं तत्र संशयः ।
तथा वंदकभावं तु स्वरूपेण ग्रसत्यसौ ॥ ४७ ॥



पदार्थसहितोन्वयः—एवं ( पूर्वोक्तरीत्या ) निःसंशयं श्रीगुरुर्वंद्यो न भवति । श्रीगुरोर-

वंद्यत्वे सिद्धे वंदकोऽपि न सिद्धयतीत्युक्तं तथेति । स्वयं पूर्णस्वरूपः सन् स्वरूपे वंदकायाप्यवकाशं न ददाति ॥ ४७ ॥

पुत्राभावे यथा जाते पित्रभावोऽपि जायते ।
तथैव वन्दकाभावे वंद्याभावः सुनिश्चितः ॥ ४८ ॥

पदार्थसहितोन्वयः—वंदकस्याभावे वन्द्यमपि नास्तीत्याह सदृष्टांतं पुत्रेति । पुत्रस्याभावे पित्रभावः ( पित्रनाम्नोऽप्यभावः ) सिद्ध एव ॥ ४८ ॥

बिंबे दृष्टे यथा नाशः प्रतिबिंबेऽपि दृश्यते ।
तथा वंदकनाशे हि वंद्यनाशोऽपि जायते ॥ ४९ ॥

पदार्थसहितोन्वयः—उक्तमेवार्थं दृष्टांतांतरेण कथयति । बिंबनाशात्प्रतिबिंबनाशोऽवश्यमेव भवति ॥ ४९ ॥

दृष्ट्यगोचरतत्त्वं तु दृष्ट्या द्रष्टुं न शक्यते ।
अत्रालौकिकरूपं हि प्रसादं लब्धवानहम् ॥ ५० ॥



पदार्थसहितोन्वयः—दृष्ट्याः ( चर्मचक्षुषः ) अगोचरं यत्तत्त्वं तच्चर्मचक्षुषा न दृश्यते । अतः

अत्र ( स्वरूपविचारे ) यो गुरुकृपारूपः प्रसादो मया लब्धः स लौकिककल्पनाया अविषयोऽस्ति ॥ ५० ॥

सतैलवर्तिको दीपो दृष्टांतो नात्र युज्यते ।
कर्पूरदीप एवात्र समीचीनस्तु वर्तते ॥ ५१ ॥

पदार्थसहितोऽन्वयः—अत्र ( स्वस्वरूपविचारे ) तैलवर्तिका युक्तस्य दीपस्य दृष्टांतो योग्यो नास्ति । परं कर्पूरदीपस्यैव योग्योऽस्ति ॥ ५१ ॥

अग्निकर्पूरसंयोगे क्षणेनैतद्धि दृश्यते ।
यदग्निस्तं च कर्पूरं दग्ध्वा स्वयं विलीयते ॥ ५२ ॥

पदार्थसहितोन्वयः—अग्निकर्पूरयोःसंयोगमात्रे क्षणेनोभौ नामशेषौ भवतः ॥ ५२ ॥

गुरोर्दर्शन मात्रेण वंद्यवंदकभावना ।
नष्टा मयि यथा स्वप्नयुग्मं नश्यति जागृतौ ॥ ५३ ॥

पदार्थसहितोन्वयः—यथा स्वप्ने दृष्टं गुरुशिष्यादि द्वंद्वं जागृतौ नश्यति श्रीगुरोर्दर्शनसमकालमेव मम वंद्यवन्दककल्पना नष्टा ॥ ५३ ॥

किं बहुनात्र चोक्तेन द्वैतभावो ह्यपाहृतः ।
मयाप्यद्वैतरूपेण नतं गुरुपदांबुजम् ॥ ५४ ॥

पदार्थसहितोन्वयः—अत्र ( श्रीगुरोर्नमने ) बहुनोक्तेन किं स्यात् । ममद्वैतभावो निश्चयेन निरस्तः । अत एव श्रीगुरोः पदकमलं मयाऽद्वैतरूपेणैव नतम् ॥ ५४ ॥

अद्भुतं हि गुरोः सख्यं द्वैताभावेन राजते ।
गुरुशिष्यविलासेन वृद्धिमायाति तत्सुखम् ॥ ५५ ॥

पदार्थसहितोन्वयः—श्रीगुरोरद्भुतं सख्यं विना द्वैतेन शोभते । तत्सुखं ( तस्य सख्यस्य सुखं ) गुरुशिष्ययोःपरस्परविनोदेन वृद्धिं ( अत्युन्नतभावं ) आयाति ( प्राप्नोति ) ॥ ५५ ॥

एकस्मिन्निजरूपे तु विना द्वैतेन शोभते ।
एकत्वमपि न स्पृष्ट्वा न व्रजत्येव शून्यताम् ॥ ५६ ॥

पदार्थसहितोन्वयः—एकस्मिन् ( केवलेऽद्वैते ) निजरूपे द्वैतसंबंधं विना शोभते श्रीगुरुः । स द्वैतापेक्षं एकत्वमपि न स्वीकरोति शून्यभावमपि च न गच्छति ॥ ५६ ॥

मूर्तमेतद्यथाकाशे विश्वं दृष्टं तथात्मनि ।
शुद्धस्फुरणरूपे तु दृष्टमपि न दृश्यते ॥ ५७ ॥

पदार्थसहितोन्वयः——यथा एतत् ( दृष्टिगोचरं ) मूर्तं साकारं भूधरादिकं नामरूपात्मकं विश्वमाकाशांतर्गतं प्रतीयते तथा स कारणकार्याध्यासरूपमपि तदात्मनि ( चिदाकाशे मयि ) प्रतीयते । शुद्धज्ञानस्वरूपे मयि तु तद्दृष्टमपि नभसो नीलतादिवत् नास्त्येव ॥ ५७ ॥

पूर्णापूर्णस्य भावोऽब्धौ विरुद्धो वर्तते यथा ।
सदा गुरुत्वशिष्यत्वे गुरौ विलसतस्तथा ॥ ५८ ॥

पदार्थसहितोन्वयः——यथा पूर्णत्वमअपूर्णत्वं च विरुद्धे अप्येकस्मिन् सागरे वर्तेते । तथा गुरुत्व-शिष्यत्वे अपि एकस्मिन् गुरुरूपे प्रकाशेते ॥ ५८ ॥

तमःकाशौ विरोधेन वर्तेते हि स्वभावतः ।
तथापि सूर्यरूपे तु स्वयं सूर्यो हि राजते ॥ ५९ ॥

पदार्थसहितोन्वयः——यद्यपि तमस्तेजसी स्वभावतः विरुद्धे स्तः तथापि सूर्यरूपे तयोः विरोधो नास्ति । तेजोराशिः सूर्यः स्वरूपेणैव राजते । हि इति प्रसिद्धम् ॥ ५९ ॥

एकत्वं न भवेद्यत्र नानात्वं तत्र स्यात् कथम् ।
एकत्वमनेकत्वं वा कल्पितुं न हि शक्यते ॥ ६० ॥



पदार्थसहितोन्वयः——यत्र ( आत्मस्वरूपे ) एकत्वमपि नास्ति तत्र नानात्वकल्पना न कथ-मपि स्यात् । स्वरूपमुभयकल्पनावर्जितमित्यर्थः ॥ ६० ॥

गुरुत्वेन लघुत्वेन गुरुरेकः प्रभुर्भवेत् ।
द्वैतवच्च विना द्वैतं स्वयमेव हि राजते ॥ ६१ ॥

पदार्थसहितोन्वयः—गुरुत्वेन लघुत्वेनापि ( गुरुशिष्यरूपाभ्यां ) एकः श्रीगुरुरेव प्रभुरस्ति श्रीगुरु स्वरूपे द्वैतं नास्त्येव । येन गुरुत्वं शिष्यत्वं च सिध्येते तद्गुरुत्वं सर्वदाऽलुप्तत्वेन वर्तते । तत्के-वलं प्रत्ययरूपमेकमेवाद्वितीयमस्ति । तथापि स गुरुः स्वयमेव स्वलीलयैव द्वैतभागिव गुरुरूपः शिष्यरूपश्च प्रतीयते । द्वैतं विनैव ॥ ६१ ॥

स्वर्णत्वेन प्रकाशेते स्वर्णं च भूषणं तथा ।
चंद्रश्चापि प्रभाचापि चंद्ररूपं हि केवलम् ॥ ६२ ॥

पदार्थसहितोन्वयः––उपरितनं सिद्धांतं दृष्टांताभ्यां विशदयति स्वर्णत्वेनेति । स्वर्णं तथा भूषणं द्वे इव प्रतीते अप्येकं स्वर्णमेव वर्तेते । चंद्रप्रभे चैकश्चंद्र एव । नात्र द्वैतावकाशः संभवति ॥ ६२ ॥

कर्पूरो मकरंदश्च द्वैतं किमपि नार्हतः।
गुडे प्रतीतं माधुर्यं गुडरूपं हि केवलम् ॥ ६३ ॥

पदार्थसहितोन्वयः––उक्तार्थमेव दृष्टांतांतरे योजयति कर्पूर इति । कर्पूरः कर्पूरामोदश्चैकरूपेणैव वर्तेते । गुडो गुडमाधुर्यं चैकरूपे एव । हि प्रसिद्धिद्योतकमित्यर्थः ॥ ६३ ॥

तथैव गुरुरूपे हि गुरुशिष्यत्वशोभनम् ।
द्वैतरूपे प्रतीतेऽपि स्वरूपं न द्विधा भवेत् ॥ ६४ ॥

पदार्थसहितोन्वयः—गुरुत्वं शिष्यत्वं चोभयमप्येकं गुरुरूपमेव । गुरुशिष्यरूपेण प्रतीयमानोऽर्थः न वास्तवः । स उक्तिमात्र एव आत्मतत्त्वं सदैकं स्वरूपमेव ॥ ६४ ॥

मुखाभासो यथादर्शे भ्रमेणैव प्रतीयते ।
मुखं यथा मुखत्वेन कूटस्थोऽपि स्वयं तथा ॥ ६५ ॥

पदार्थसहितोन्वयः—प्रतीयमानं द्वैतमपि भ्रमसिद्धमस्तीत्युच्यते मुखेति । आदर्शे प्रतीयमानेन मुखेन मुखद्वयं न भवति । तथैव कूटस्थोऽपि गुरुशिष्यरूपाभ्यां न भेदभाक् कदापि भवति ॥ ६५ ॥

निरंजनप्रदेशे तु सुप्तो यो विद्यते नरः ।
अप्रबुद्धः प्रबुद्धो वा स्वयमेव भवेत्खलु ॥ ६६ ॥

पदार्थसहितोन्वयः—उक्तमर्थमेव दृष्टांतांतरेणाभिव्यनक्ति निरंजनेति । एकांतस्थले वर्तमानः पुरुषः सुप्तो जाग्रद्वैकाक्येव वर्तते ॥ ६६ ॥



गुरुशिष्यमिषेणैव बोध्यबोधकलीलया ।
स्वविलासं करोत्येष द्वैताभावेन चात्मनः ॥ ६७ ॥

पदार्थसहितोन्वयः—किमर्थं तर्हि गुरुशिष्यपरंपरा लोके रूढेति शंकां निवारयति गुर्विति । एष श्रीगुरोर्विलास एव नात्र द्वैतभावः ॥ ६७ ॥

विनादर्शनिमित्तेन चक्षुः स्वमवलोकयेत् ।
गुरुशिष्यमिषाभावे तथानन्दोनुभूयते ॥ ६८ ॥

पदार्थसहितोन्वयः—तर्हि स्वविलास एव आनन्दानुभवोऽस्तीति सिद्धम् । नेत्याह सदृष्टांतं विनेति । यथाऽऽदर्शेऽवलोकनक्रियां कुर्वदकुर्वद्वा चक्षुः स्वयं नित्यापरोक्षमस्त्येव तथा स्वरूपानन्दोऽपि स्वेनानुभूयतेऽनुभवस्वरूपत्वात् ॥ ६८ ॥

विनैव द्वैतभावेन न त्यक्त्वापि निजैकतां ।
गुरुशिष्यादिरूपेण गुरुरेव भवेत्खलु ॥ ६९ ॥

पदार्थसहितोन्वयः—गुरुशिष्यादिरूपेण गुरुरेको विराजत इत्येतदेव दृढीकर्तुं पुनराह द्वैतभावं विनैव निजैकतामपि न त्यक्त्वेत्यादि ॥ ६९ ॥

विना निवृत्तिरित्याख्यां निवृत्तिरपि शोभते ।
निवृत्तिराज एवासौ निवृत्तिरूपेण राजते ॥ ७० ॥

पदार्थसहितोन्वयः—निवृत्तिरित्याख्यां विना निवृत्तिरपि शोभते ॥ ७० ॥

प्रवृत्तेरविरोधेन निवृत्तिज्ञानतोऽपि वा ।
संबंधनिरपेक्षः संबंधी भवितुमर्हति ॥ ७१ ॥

पदार्थसहितोन्वयः—प्रवृत्तिसाक्षेपनिवृत्तिसंबंधं विना गुरुशिष्यादिसंबंधवान् भवति श्रीनिवृत्तिर्गुरुरित्याह प्रवृत्तेरित्यादि । यथा प्रवृत्तिनिरपेक्षस्तथा निवृत्तेरपि निरपेक्षत्वाद् वास्तवनिःसंबंधः श्रीगुरुः स्वस्मिन् लीलया संबंधमिव दर्शयति ॥ ७१ ॥

स्वाभावेन यथा रात्रिरह्ने श्रैष्ठ्यं ददाति च ।
न प्रवृत्तिनिरोधेन निवृत्तिः श्रीगुरुस्तथा ॥ ७२ ॥

पदार्थसहितोन्वयः—यथा रात्रिः स्वाभावेन ( स्वनिर्गमनेन ) अह्ने ( दिवसाय ) श्रैष्ठ्यं ददाति तथा श्रीगुरुर्निवृत्तिः प्रवृत्तिनिरोधेन न ॥ ७२ ॥

उपाध्यपेक्षया रत्नं शोभते किल सर्वशः ।
न तथा गुरुराजेंद्रः स्वयमेव हि भास्करः ॥ ७३ ॥

पदार्थसहितोन्वयः–रत्नादीनां शोभा संघर्षणादिकमपेक्षते । निरपेक्षमेव श्रीगुरुस्वरूपं विराजते । भास्करः ( तेजस्वी ) ॥ ७३ ॥

असौ चन्द्रप्रकाशो हि गगनं व्याप्य तिष्ठति ।
यत्नसाध्यः प्रकाशो न स्वमहिमा स्वरूपगः ॥ ७४॥
निजनिवृत्तिरूपस्य स्वयं गुरुर्हि कारणम् ।
स्वगंधसेवने पुष्पं स्वयं घ्राणं भवेद्यथा ॥ ७५ ॥

पदार्थसहितोऽन्वयः—यथा चंद्रस्य प्रकाशश्चंद्ररूप एव यथा च घ्राणं विनाऽपि पुष्पं स्वयं गंधवदस्त्येव । तथा श्रीगुरोर्निवृत्तिरूपे स्वयं श्रीगुरुरेव कारणम् । नान्यत्किमप्युपाध्यादिकम् ॥ ७४॥७५॥

यथा स्वमुखसौंदर्यं नरो ज्ञानेन पश्यति ।
बाह्यसाधनयत्नस्तु न कारणं भवेत्खलु ॥ ७६ ॥
निशानिवारणेनैव ह्यहरागमनेन वा ।
सूर्ये सिद्धं न सूर्यत्वं स्वातंत्र्येणैव वर्तते ॥ ७७ ॥

पदार्थसहितोऽन्वयः—यथा नरः स्वमुखसौंदर्यं ज्ञानेन पश्यति तु (परन्तु) बाह्यसाधनयत्नः खलु निमित्तमात्रम् । सूर्ये सूर्यत्वं हि (निश्चयेन) निशानिवारणेनैवाहरागमनेन वा सिद्धं न किन्तु स्वातंत्र्येणैव वर्तते ॥ ७६ ॥ ७७ ॥

तथैव बोधबोध्यो न प्रमाणप्रमितोऽपि वा ।
स्वतंत्रः केवलोऽसौ हि स्वरूपेणैव वर्तते ॥ ७८ ॥

पदार्थसहितोन्वयः—बोधबोध्यः न ( बोधेन ज्ञातुं शक्यो न ) प्रमाणप्रमितः न ( प्रमाणैर्ज्ञातुं शक्यो न ) ॥ ७८ ॥

नित्यलब्धे स्वरूपे वै प्रवृत्तिर्निवृत्तिः कथम् ।
कर्तव्यमात्राभावेन गुरोः पादाब्जवन्दनम् ॥ ७९ ॥

पदार्थसहितोन्वयः—नित्येति । नित्यप्राप्ते श्रीगुरुस्वरूपे प्रवृत्तिनिवृत्त्यादिव्यवहारो न संभवति । अत एव मया कृतं वन्दनं कर्तव्यमात्राभावेन ( कायिकवाचिकमानसिकक्रियाणां संबंधं विनैव ) वर्तते ॥ ७९ ॥

गुर्वभिवन्दनेनात्र वाचामृणविमोचनम् ।
परादिरूपा वाग्देवी ज्ञानानन्दे विलीयते ॥ ८० ॥

पदार्थससितान्वयः—उक्तप्रकारकमभिवन्दनं कृत्वा परादीनां वाचामृणान्मुक्तो भवामि वाग्देवी च स्वरूपानन्दे लीना भवति ॥ ८० ॥



इति श्रीज्ञानदेवकृतामृतानुभवस्य संस्कृतभाषांतरे सद्गुरुस्तवनं नाम द्वितीयं प्रकरणम् ॥

॥ हरिः ॐ तत्सत् ॥

# प्रकरणं तृतीयम् ।



ॐ परमात्मने नमः । सांप्रतं वाग्गुणस्य स्पष्टतामविद्यायाश्च मिथ्यात्वमस्मिन् प्रकरणे निरूपितम् । तदनुभवामृतरहस्यं मन्मिषेण श्रीनित्यानन्दः स्वयं निरूपयति ।

यस्योद्घोषेण सहसा स्वात्मनिद्रा विनश्यति ।
पूर्णत्वेनर्णनिर्वृत्तिर्निद्रालुत्वं हि जागृतिः ॥ १ ॥

टीकाः——वाक्संबंधि यद्यत्साधनं कथ्यते तेन तेन नित्यानित्यविवेकं कृत्वा देहात्मबुद्धिं निवर्त्य ब्रह्मैवाहमिति बुध्यते । इयमेवात्मजागृतिर्विद्वद्भिरुच्यते । तथापि तेन जागरेण निद्रा न नश्यति किन्तु जागृतिरूपेण निद्रैव तिष्ठति । यथा माषेषु कृष्णं शुक्लं वा न किमपि विचारार्हं भवति तथैवात्मानात्मविचारो ज्ञेयः । देहाहंभावे निवृत्तेऽप्यात्माहंभावरूपेण देहभाव एवावतिष्ठते । नात्राहंभावस्य क्वापि निवृत्तिर्वर्तते । अत एव परादिवाचामृणस्य निवृत्तिर्न भवति । अहंकारे सति वाचो वाचालत्वं न मुञ्चंति । स्वरूपभूतं यत् सिद्धजागरणं वर्तते तस्यानुभूतिर्यदि न भवति तर्हि प्रतिक्षणं जागरितेऽपि न तद्यथार्थं जागरणम् । स्वप्रकाशे निद्रातमोऽभावाज्जागरणमित्युक्तिरपि न संघटते । आत्मस्वरूपं तु कालत्रयेप्यबाध्यं वर्तते बाधकाभावात् । कार्यवर्गस्य बाध्यत्वं भूजलतेजः-

समीरेषु दृश्यते । आत्मा तु निर्गुणनिराकाररूपेणैव तिष्ठति । अतस्तु न कोऽपि तस्य बाधकोऽस्तीत्युक्तं भगवता श्रीकृष्णेन ॥ श्लोकः ॥ नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः । न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ १ ॥ अयं भावः । अस्यादि शस्त्रं स्वभिन्नं पदार्थं छिनत्ति न तु स्वमिति प्रसिद्धमेव । आत्मा तु शस्त्रादीनां सत्तास्फुरणदानेन सर्वेषामन्तरात्मत्वेनैव विद्यते । अत्र श्रुतिः । यः पृथिव्यां तिष्ठन् पृथिव्यन्तरो यं पृथिवी न वेद । यस्य पृथ्वी शरीरम् । यः पृथ्व्यन्तरो यमयन् । एष ते आत्माऽन्तर्याम्यमृतः इति । एतेन च्छेदनदहनक्लेदनशोषणक्रियाणामविषयत्वं सिद्धम् । श्रीभगवताप्युक्तम् ॥ श्लोकः ॥ अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च । नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ १ ॥ पूर्वोक्ते नित्यशुद्धबुद्धस्वरूपेऽज्ञानानिद्रा न कापि संभवति । संभवेच्चेत्तर्हि बोधजागरणमपि निद्रैवेति स्वीकर्तव्यम् । अत एव बोधाबोधादिकं स्वस्वरूपे न किमपि संभवतीति सिद्धम् ॥ १ ॥

परादयश्चतस्रोऽपि जीवमोक्षकृतः खलु ।
अविद्यानाशने तासां नाशो ध्रुवस्तथापि च ॥ २ ॥

टीका:——परा पश्यन्ती मध्यमा वैखरीति यद्वाक्चतुष्टयमुच्यते तत्सर्वमविद्यात्मकमेव । अत एवाविद्याया निवृत्तौ तस्यापि निवृत्तिर्युक्ता । अविद्याध्यारोपे सति जीवत्वारोपः । अविद्यारोपविनाशे आरोपितजीवस्य बंधविनाशः । बंधविनाशे सति तत्साधनभूतश्रवणादिविनाशः । साधनविनाशे परादीनां विनाशः सुतरामेव सिध्यति ॥ २ ॥

एतत्स्पष्टीकरणं सिद्धशिरोमणिना ज्ञानदेवेन स्वयमेव क्रियते श्लोकद्वयेन ।

हस्तपादयुतो देहः सेंद्रियं वै तथा मनः ।
रश्मिजालयुतश्चापि विद्यते सविता सदा ॥ ३ ॥
निद्रानिवृत्तिमात्रेण स्वप्ननाशो भवेद्यथा ।
वाचश्चापि तथैवेमा नश्यन्त्यविद्यया सह ॥ ४ ॥

टीका:—यथा देहेन सह हस्तपादादीनां नाशो दृश्यते सर्वैर्न च :केनापि तेषां नाशं विना देहविनाशोऽनुभूयते । अथवा मनोनिवृत्तौ यथा इंद्रियाणामपि निवृत्तिरवश्यमेव भवति । किंवा यथा रवावस्तंगते सति तत्किरणसमूहोपि तेनैव सह विलीयते । उत स्वप्ननिवृत्तिर्निद्राविनाशे स्वयमेव भवति । कारणे सति कार्यप्रतीतिरिति न्यायेन सति सुवर्णमृदादौ कटकघटादीनां प्रतीतिर्वर्तते नत्वसति । तथैवाविद्याया भावे परादीनां भावः । तदभावे तु तासामप्यभावः स्वयमेव भवतीति निष्कर्षः ॥ ३।४ ॥

यद्यपि पूर्वोक्तप्रकारेणाविद्या मृतेति ध्वनितं तथापि तस्या विनाशो यथावन्न भवति । यतो ज्ञानाकारेण सास्त्येव ततस्तत्कार्यमपि तया सहैव वर्तत इत्याह सदृष्टांतं षड्भिः श्लोकैर्भस्मार्थमित्यादिभिः ।

भस्मार्थं मारितं लोहं रसरूपेण शिष्यते ।
इंधनं च तथा दग्धं वह्निरूपेण जायते ॥ ५ ॥

टीकाः—लोहभस्मक्रियायां वनस्पतिविशेषस्य साहाय्येन लोहं मारयन्ति । तथापि तन्न नष्टं भवति किंतु रसरूपेणावशिष्यत एव । इन्धनमप्यग्नौ प्रक्षिप्तं वह्निरूपं भवति । तथाऽविद्योपाधिनिवृत्तावपि निषेधावधिरूपेणावशिष्यते ॥ ५ ॥

लवणं हि द्रवीभूतं स्वादरूपेण विद्यते ।
निद्रायां च निवृत्तायां जाग्रद्रूपेण सा भवेत् ॥ ६ ॥
तद्वदेव परादीनां विनाशेऽविद्यया सह ।
तत्त्वज्ञानाभिधानेन ह्युत्तिष्ठन्त्येव ताः पुनः ॥ ७ ॥
तत्त्वज्ञानप्रदीपोयं तासां नाशे प्रदीपितः ।
तथापि भ्रम एवैष बोधरूपेण जायते ॥ ८ ॥



टीकाः—चिन्मात्रत्वेन चिद्घनत्वेन दृङ्मात्रत्वेन भेदशून्यत्वेन नित्यानन्दत्वेन कल्याणस्वरूपत्वेन निरंजनत्वेन च यो विराजते तस्मिन्नन्यथाभावः कथं वर्तेत । अविद्यावच्छिन्नत्वेन जीवत्वाभावश्च कथं संघटेत । पुनरविद्याखंडनेन तत्त्वज्ञानं परादिवाचां साहाय्येन भवति ।

अविद्यया सह तस्यापि विनाश एव । एवं वाक्यसमुदाये निरस्ते सति यत्तत्त्वज्ञानं भवति तदपि बोध्यबोधकत्वेन वाचायाः प्रवृत्तिरेव । यथा लवणाकारे जले विलीनेऽपि तस्य रसत्वेन तत्र प्रतीतिर्वर्तते । उत निवृत्तेऽपि निद्रादोषे सा निद्रैव स्वप्नभासेन प्रतीयते स्वप्न एव जागृतिरूपेणानुभूयते अत एव निद्रैव स्वप्नरूपेण दृश्यते । तथा यद्यपि स्वरूपे पूर्वापरभावो न विद्यते तथापि बोध्यबोधकरूपेण बोधः स्वयमेव राजते । यस्मिन् बोधे बोध्यबोधकत्वेन व्यवहारो भवति स एव भेद इत्युच्यते । स भेदो वाचासंबन्धेनैव भवति । अतः परादीनां निवृत्तौ सत्यां यज्ज्ञानं भवति स तु परिश्रम एव । स्वरूपज्ञानमेव ज्ञानमिति सिद्धम् ॥ ६।७।८ ॥

आगता दिशति स्वप्नं गता दिशति जागृतिम् ।
एवमेकैव वै निद्राऽसौ दृष्टिद्वयसूचिका ॥ ९ ॥
जीवन्ती हि तथाऽविद्यास्त्यन्यथा बोधदर्शिका ।
यथार्थबोधनष्टापि बोधरूपोत्थिता पुनः ॥ १० ॥

टीका:—निद्रावृत्तिः स्वसद्भावे स्वप्नं प्रदर्शयति स्वाभावे च जागरणं भासयति एवं जाग्रत्स्वप्नयोर्यो व्यवहारः स निद्रानिमित्तक एव । निद्रया विना स्वप्नजाग्रद्व्यवहारो न कोपि वर्तते । तथैव देहजगज्जीवेश्वरादिरूपो योऽन्यथाबोधः स सर्वोऽविद्यारूप एव । एषोऽविद्यानिवृत्ति-

व्यवहारोऽप्याविद्यक एवेति कल्पितुमुचितमित्याह सदृष्टान्तमागतेति द्वाभ्याम् । अहो शुद्धबोधघने चिन्मात्रस्वरूपेऽध्यारोपापवादरूपो यो विनोदो विद्वद्भिः कृतः स त्वतीवापूर्वो वर्तते । यथा मौक्तिकं भग्नं कृत्वा तस्य पुनः संधानमतिकुशलधियामेव विनोदो भवति तथैवेदमपि ज्ञेयम् ॥ ९ । १० ॥

जीवन्ती वापी नष्टा वा ह्येषाऽविद्यैव केवला ।
बंधनं मोक्षणं चापि जीवस्य कुरुते सदा ॥ ११ ॥

टीकाः—शुद्धबोधस्वरूप आत्मन्येषोऽविद्याशब्दोऽपि न संभवति । संभवेच्चेत्तर्हि तद्वाचारंभणमेव स्यात् । वाचारंभणमात्रेणैव शुद्धचिन्मात्रे जीवेशजगद्भावः कल्पितः । तमारोपितार्थं च स्वीकृत्य बन्धमोक्षाद्यर्थमनुलक्ष्य तत्रैषा दक्षा भवति नित्यापरोक्षस्वरूपे तु न किमपि करोतीत्याह जीवन्तीति । अविद्या स्वास्तित्वे बंधं प्रकटयति स्वाभावे च मोक्षं प्रदर्शयति । स्वात्मनि त्वस्या न कोपि विलासो विद्यते । एवं बंधमोक्षादिरूपेण यद्द्वन्द्वं वर्तते स बन्ध एव । बन्धसंबंधी मोक्षोऽपि बन्ध एवेत्यर्थः ॥ ११ ॥

आशंका—मोक्षोपि बन्धरूपश्चेन्मोक्षो नाम किमुच्यते ।
समाधानम्—अज्ञानमुभयोर्वासो मृषारूपावुभावपि ॥ १२ ॥



टीकाः—अहो मोक्षोपि बन्धरूपः स्याच्चेत्तर्हि मोक्ष इति शब्दः किमर्थं प्रवृत्तः । बन्धशब्दे-

नापि व्यवहारो भवेदित्याशंकायामाशंकासमाधानं चाह मोक्षेति । बन्धमोक्षयोर्यो व्यवहारः सोऽज्ञानमूलक एव । अतःस्वस्वरूपे बन्धमोक्षादीनां व्यवहारोऽलीक एवाज्ञानकल्पितत्वात् ॥ १२ ॥

कल्पितस्य पिशाचस्य बालानां तुष्टये मृतिः ।
प्रौढानां स नास्त्येव मृत्युस्तस्य कुतस्ततः ॥ १३ ॥
घटाभावस्य नाशेन जाता हानिर्गुरुर्मम ।
एवं केनापि मन्येत नोक्तिरेषोचिता खलु ॥ १४ ॥
एवं बन्धो हि मिथ्या चेत् तन्मोक्षप्रसवः कुतः ।
तथाप्यविद्यया स्थानं मृतयास्यास्ति कल्पितम् ॥ १५ ॥

टीका——बन्धमोक्षादिव्यवहारः कल्पनामात्रोस्तीत्याह सदृष्टांतं कल्पितस्येत्यादिभिस्त्रिभिः । बालस्य बहिर्गमनरोधार्थं यथा जननी कल्पितमेव पिशाचं तं दर्शयति रुदन्तं च तं दृष्ट्वा हस्ते हस्तं निक्षिप्य मया स हत इत्युक्त्वा तं सान्त्वयति बालश्च समाधत्ते । परं प्रौढा न पिशाचो नापि तस्य नाश इत्येव जानन्ति । यथा वा अविद्यमानस्य घटस्य नाशेन मम हानिर्जातेति न कोऽपि विद्वान् वदेत्तथैव अविद्यारोपे बन्धस्तद्विनाशे मोक्ष इति दृष्टेपि बन्धमोक्षादिव्यवहारे स व्यवहार उपचारमात्रो भवति ॥ १३ । १४ । १५ ॥

शिवसूत्रे शिवेनोक्तं ज्ञानं बन्धो हि केवलः ।
सत्त्वेन ज्ञानबन्धः स्याद् वक्तीति गरुडध्वजः ॥ १६ ॥

टीका—शिवसूत्रेषु भगवान् शिवो ज्ञानं बन्ध एवेति स्पष्टं कथयति । तथा वैकुंठाधिपतिर्भगवान् श्रीकृष्णोऽपि गीताशास्त्रे निरूपयति । संमतिश्लोकः । सर्वभूतेषु येनैकं भावमव्ययमीक्ष्यते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकम् ॥ १ ॥ तथा च सत्त्वात्सञ्जायते ज्ञानमित्यादिवचनैर्ज्ञानं गुणात्मकं सिद्धम् । अत एव तद्बन्धरूपमेव भवति । अन्यच्च । सत्त्वं सुखे संजयति रजः कर्माणि भारत । अपि च । गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति । अनेन प्रकारेण यत्र यत्र संबंधि ज्ञानं तत्र तत्र गुणैकात्मता स्यादेव । अद्वितीये परिपूर्णे चिन्मात्रे सम्बन्धस्यात्यन्ताभावोऽस्ति । तत्र ज्ञानाज्ञानादिकं न किमपि स्पृशति । अनारोपितस्वरूपे आरोपमात्रं बन्ध इत्युच्यते ॥ १६ ॥

शिवकृष्णोक्तितश्चेदं मन्यत इति नैव वै ॥
अनुक्तमपि लभ्यं हि स्वानुभूतिरियं यतः ॥ १७ ॥



टीका—यत्सम्बन्धोपार्जितं ज्ञानं तत्त्वज्ञानमेवेति शिवेनोक्तं तथैव नारायणेनापि गीताशास्त्रे प्रकाशितम् । परं तत्प्रमाणबलेनैवास्माभिः स्वीक्रियत एष सिद्धान्त इति न । अपि तु

स्वानुभवोऽप्येष एवास्ति । सापेक्षं ज्ञानमज्ञानमेव । अत एव वाक्यजन्यं ज्ञानं न सुज्ञानं भवति । यन्निरपेक्षं स्वरूपभूतं ज्ञानं तदेव ज्ञानशब्देनोक्तं भवति । इयमेवापरोक्षानुभूतिः । अस्मिन्ननुभवाख्य-ग्रन्थे प्रमाणांतरापेक्षा न वर्तते ॥ अनुभवमात्रेऽद्वितीये ज्ञानस्वरूपे न प्रमाणप्रमेययोः कोऽप्यवकाशो विद्यते ॥ १७ ॥

पूर्णं यदात्मनो ज्ञानं ज्ञानं वाञ्छति तद्धि चेत् ।
भास्करस्तर्हि देवोऽसौ प्रभातं चिंतयेत्खलु ॥ १८ ॥

टीकाः——आत्मा स्वप्रकाशेन राजते । न तत्राज्ञानसंबंधोऽस्ति । अज्ञानेनावृतः सन्नात्मा जीवभावमापन्नः स्वस्मिन् कर्तृत्वभोक्तृत्वादिधर्मान् मन्यमानः संसारचक्रे भ्रमति विक्षेपशतेन च विक्षिप्तः सन् पुनः श्रवणादिसाधनसंपत्तिसंपन्नो ज्ञानं प्राप्याज्ञानं तत्कार्यं च निवर्तयतीति मन्येत चेत्तर्हि तत्स्वस्कन्धारोहणमिवाशक्यं हास्यास्पदं च स्यादित्याह सदृष्टांतं पूर्णमित्यादिना ॥ १८ ॥

ज्ञानान्तरेण श्लाघा चेद् व्यर्थं ज्ञानं स्वकं तदा ।
स्वाविर्भावं तु दीपेन को मन्येत विना भ्रमम् ॥ १९ ॥

टीकाः——यन्निरन्तरं चिन्मात्ररूपं विक्षेपसम्बन्धरहितं ज्ञानाज्ञानविहीनं विज्ञानघनस्वरूपं चात्मरूपं तन्नापेक्षते ज्ञानान्तरं स्वप्रकाशन इत्याह दृष्टान्तान्तरेण ज्ञानेनेत्यादिना । भ्रांतिं विना न कोऽपि पुरुषोऽहं दीपेन प्रकाशितोऽस्मीति मन्येत ॥ १९ ॥

नित्यप्राप्तोऽपि स्वप्राप्त्यायटेद्देशान्तरं भ्रमात् ।
आत्मप्राप्तिस्ततस्तस्य को नु धीमान् वदेदिदम् ॥ २० ॥

टीका:—नित्यप्राप्तस्वरूपस्य न साधनादिभिः प्राप्तिरित्याह सदृष्टान्तं सोपहासं च नित्येति । नित्यप्राप्तो देवदत्तः स्वप्राप्त्यर्थं देशान्तरं गच्छेदिति न कोऽपि बुद्धिमान् पुरुषो वदेत् ॥ २० ॥

ज्ञानेनात्मप्रमां कुर्वञ् ज्ञानरूपोपि सन् स्वयम् ।
सोहमित्येव बन्धं स्वमाशूपकल्पयेत्खलु ॥ २१ ॥

टीका:—शुद्धज्ञानमात्र आत्मा विक्षेपाभाववान् भवितुमर्हत्यद्वितीयत्वाद् ब्रह्मवत् । यन्नैवं तन्नैवं यथा घटादि । विक्षेपाभावेऽपि ज्ञानमपेक्षेत चेत् सोहमस्मि चैवं मन्येत चेत्तर्हि एष एव बन्धः । शुद्धचिन्मात्रे भ्रमहेतोरभावः । तस्याभावे भ्रमाभावः । भ्रमाभावे तन्निवृत्त्यभावः । निवृत्त्यभावे तोषाभावः । तोषाभावे श्लाघ्यत्वाभावः । अत एव त्रिविधपरिच्छेदशून्ये नित्यसिद्धेऽद्वैतस्वरूपे बन्धमोक्षादिशब्दरचनापि वक्तुमेवाशक्या । बन्धमोक्षभावो तन्निवृत्तिप्राप्तिहेतुभूतसाधनकलापस्यापि निवृत्तिरिति किं वक्तव्यम् । अत्र संमतिश्लोकः ॥ बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः । गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् ॥ १ ॥ ( भागवते )

ज्ञानं यदि स्वयं नष्टं मोक्षस्तर्हि किमात्मकः ।
नष्टे ज्ञाने तु यो मोक्षस्तं हि मोक्षं वदेन्नु कः ॥ २२ ॥

टीकाः—मोक्षदातृणो ज्ञानस्याभावे मोक्षस्याप्यभावः सिद्ध एवेत्याह ज्ञानमिति ॥ २२ ॥

अतः परादयो वाचः शृङ्गारश्चतुरङ्गकः ।
अविद्यारूपजीवस्य सह तेन विनश्यति ॥ २३ ॥

टीकाः—शुद्धसंविन्मात्रे भूमनि ज्ञानमपि न सह्यते । यत्र ज्ञानमप्यतिशयेन वर्तते कुतस्तत्रान्यसाधनकल्पनावकाशः । अतो वाचोऽप्यविद्यया सह नश्यन्त्येवेति सिंहावलोकनन्यायेन प्रागुक्तमर्थमेव पुनर्विवक्षुराह अत इति ॥ २३ ॥

चतुरङ्गेन्धनं यत्तद् दग्धं ज्ञानाग्निना यदा ।
अवशिष्टं भवेत्सूक्ष्मं भस्म ज्ञानात्मकं तदा ॥ २४ ॥

टीका—बोधरूपेणाप्यज्ञानमेवात्रशिष्यत इत्याह सदृष्टान्तं चतुरित्यादिभिः पञ्चभिः । देहात्मतादात्म्यबन्धेन जन्मादिक्लेशमनुभूयातीवोपरतः सन् नित्यानित्यविवेकवैराग्यादिसाधनसंपत्त्या श्रवणादिना च ब्रह्मात्मैक्यं स्यान्नवेति संशयग्रन्थौ सत्यत्रायं प्रयोगः । स्याच्चेतर्हि वाच्ये उत लक्ष्ये । लक्ष्ये चेत्तर्हि ज्ञानेनैव मोक्षः संभवत्युतोपासनयोत कर्मणा । कर्मग्रंथिस्तु संचितप्रारब्धक्रियमाणानां भेदेन त्रिविधो वर्तते । अत्र विचार्यमाणे एतत्सर्वं व्यतिरेकेण स्वात्मनि स्वतंत्रसत्तया नास्ति । इति बोधवह्निं प्रज्वाल्य वयं सुखिनः स्यामेति मन्येत चेत्तर्हि बोधरूपः स एव बन्धः स्यादित्यर्थः ॥ २४ ॥

उदके च द्रवीभूतः कर्पूरो नैव दृश्यते ।
तथाप्यामोदरूपेण ह्यवशिष्टोऽनुभूयते ॥ २५ ॥
लिप्तस्य भस्मनो देहे गलन्ति परमाणवः ।
पाण्डुरत्वेन कान्तिर्वै तथापि शिष्यते यथा ॥ २६ ॥
दृश्यते न जलं स्पष्टं शुष्कोदके हि निर्झरे ।
आर्द्रत्वेन तथाप्यस्ति तत्तत्र च यथास्थितम् ॥ २७ ॥
छाया च न पृथक्त्वेन मध्याह्ने लक्ष्यते क्वचित् ।
अनष्टा सा तथाप्यस्ति पादतलगता यथा ॥ २८ ॥

टीकाः—कर्पूरभस्मादीनि नष्टप्रायाण्यपि रूपान्तेरणावशिष्यन्त एवेति दृष्टांतोक्तं स्पष्टमेव ॥ २५।२८ ॥

ग्रसित्वा सकलं तद्वद् द्वितीयत्वेन विद्यते ।
बोधस्तथा स्वरूपेण स्वस्मिन्नेवावतिष्ठते ॥ २९ ॥

टीकाः—दार्ष्टांतिकमाह ग्रसित्वेति । यद्यपि बोधेन द्वैतं निरस्तं तथापि बोधः स्वयमवशिष्टोऽस्ति । अत एव न द्वैतहानिर्जाता । नित्यशुद्धबुद्धमुक्तस्वभावे चिदाकाशेऽविद्यातत्कार्यारोपापवादादिकं कुतः स्यात् ॥ २९ ॥

अवशिष्टमृणं तद्धि वाग्नाशेन न मोचितम् ।
मोचितं तन्मया किंतु नत्वा पादौ स्वयं गुरोः ॥ ३० ॥

टीकाः—यद्यत्स्वरूपप्रातिसाधनं वर्तते तत्तत्सर्वं वाचां साहाय्येनैव सिध्यते । अत एव तद्वाचां ऋणमुच्यते । एतदृणं तु वाचां निवृत्तावपि न निवृत्तं भवति । इति विज्ञाय श्रीगुरुं शरणं गतोऽस्मि । तत्र श्रीगुरुचरणे वाचामत्यन्ताभावो दृश्यते । एवं तात्विकि ऋणनिवृत्तिर्जाता । एषोक्तिरप्युक्तिमात्रैव नो चेदृणं न निवृत्तं स्यात् । स्वानुभवे हि न का अपि वाचो न किमपि वाच्यं नापि च तन्निवृत्तिः । एवमात्मानुसंधानेन श्रममात्रं विनैव वागृणमोचनं भवेत् । तेन चातिशयं वाक्पांडित्यं भवेत् । निजसुखानुभूतिश्च न भवेदेव । अतद्व्यावृत्तिरूपेण निवृत्तेऽपि स्थूलभागे वाचामगोचरत्वेन बोधप्रतीतिरपि भवेदेव । तथापि स्वानुभूतिपरिचयो गुरुकृपया विना न भवति । यद्यपि विवेकदृष्ट्या निवृत्तः स्थूलाद्यहंकारान्तदृश्यवर्गस्तथापि सूक्ष्मसंदेहशेषाऽपि संसृतिरवश्यंभाव्या । इयं संसृतिरेव वागृणमभिधीयते । यथा वटबीजमतिसूक्ष्ममपि महावटाविस्तारस्य हेतुर्वर्तते । तथानेन सूक्ष्मेण ऋणेनावशिष्टेन न सुखोपलब्धिः स्यात् । अतो भक्तिज्ञानवैराग्ययुक्तस्य श्रीगुरुं शरणं गतस्यैव सर्वथा ऋणमुक्तिर्भवेत् ॥ ३० ॥

अतः परादयो वाचो ज्ञानेऽज्ञाने च कल्पिताः ।
निवर्त्या अतियत्नेन श्रीगुरोः पादसेवया ॥ ३१ ॥

टीकाः—वागृणनिवृत्त्युपायं कथयति स्वानुभवेन अत इति । यावज्ज्ञानाज्ञानादिकं वर्तते तावद्वागादीनां निवृत्तिर्न भवति । विधिनिषेधरूपेण वाग्व्यापारो हि दृश्यते । वागादिव्यापारे सति न शुद्धबोधो भवेत् । यन्मनोवागगोचरं तत्र वाग्व्यापारस्यासंभवः । वाग्व्यापारस्तु ज्ञानाज्ञाननिर्देशीय एव । स्वरूपं तु स्वयं शुद्धचिन्मात्ररूपं वर्तते । तत्र न किमपि पूर्वापरत्वम् । तदेव सद्गुरोः पादारविन्दम् । तत्स्वात्मत्वेन प्राप्याभेदेन स्थातुमुचितम् स्वस्मिन्नविरोधेन स्थित्वैषा स्थितिः श्रीगुरोः प्रसादेन प्राप्तव्या । अत्रैषोऽभिप्रायो वर्तते । श्रीगुरोःस्वरूपे न कोऽपि भेदावकाशोस्तीत्येकनिष्ठया सद्गुरुप्रसादं प्राप्य ये तद्रूपेण स्थास्यन्ति तेषां जन्ममरणादिद्वन्द्वानामत्यंताभावो भविष्यति । स्वसमाधानेन शरणाशरणादीनामप्यनायासेनाभावो भवति । सद्गुरुकृपाप्रसादेन सर्वत्राभेदरूपो वस्तुयाथात्म्यबोधो भवति ॥ ३१ ॥

इति श्रीज्ञानदेवकृतामृतानुभवस्य संस्कृतभाषांतरे वागृणमोचनं नाम तृतीयं प्रकरणम् ।

---

हरिः ॐ तत्सत् ॥

## प्रकरणम् ४



**यथा निद्राविनाशे तु जागृतिर्वर्तते स्वयम् ।**
**तथाऽज्ञाननिवृत्त्यंते ज्ञानं स्वेनैव राजते ॥ १ ॥**

पदार्थसहितोन्वयः—यथा निद्राविनाशे तु ( पुनः ) स्वयं जागृतिरेव वर्तते तथाऽज्ञाननिवृत्तावपि ज्ञानं स्वेन एव ( निश्चयेन ) राजते ( शोभते ) ॥ १ ॥

आदर्शस्य निमित्तेन प्रतिबिंबः प्रतीयते ।
मुखं तु दर्शनात्पूर्वं स्वभावेनैव विद्यते ॥ २ ॥

पदार्थसहितोन्वयः—आदर्शस्य निमित्तेन प्रतिबिंबः प्रतीयते । मुखं तु दर्शनात्पूर्वमपि स्वभावेनैव विद्यते ॥ २ ॥

येन केन प्रकारेण यद्यात्मैक्यं करिष्यति ।
तीक्ष्णधारस्तदा खड्गः स्वधारां छेत्तुमर्हति ॥ ३ ॥

पदार्थसहितोन्वयः—ज्ञानं येन केन प्रकारेण सर्वत्रात्मैक्यं करिष्यति चेत् तर्हि खड्गः स्वतीक्ष्णधारया स्वधारां छेत्तुमर्हति ॥ ३ ॥

यथा गृहं प्रविष्टोपि तद् दग्ध्वा ज्वालयेत् स्वयम् ।
भीतश्चोरः स्वभारे हि गुप्तः सन् प्राप्यते खलु ॥ ४ ॥

पदार्थसहितोन्वयः—यथा कश्चिद् गृहं प्रविष्टोऽपि ( निश्चयेन ) तद् गृहं दग्ध्वा स्वमपि प्रज्वालयेत् । उत यथा चोरोपि ( निश्चयेन ) भीतः सन् स्वभारे गुप्तो खलु ( निश्चयेन ) स्वयमपि प्राप्येत ॥ ४ ॥

कर्पूरखण्डं प्रज्वाल्य यथाग्निर्नश्यति स्वयम् ।
तथैवाज्ञाननाशेऽपि न ज्ञानमवशिष्यते ॥ ५ ॥

पदार्थसहितोन्वयः—यथा कर्पूरखण्डं प्रज्वाल्याग्निः स्वयमपि नश्यति तथैव ( निश्चयेन ) अज्ञानं विनाश्य ज्ञानं नावशिष्यते ॥ ५ ॥

अज्ञानानाश्रयत्वेन ज्ञानवृद्धिर्हि जायते ।
एवं चेत्तर्हि ह्येतत्तु स्वस्याभावाय तिष्ठति ॥ ६ ॥

पदार्थसहितोन्वयः—अज्ञानस्यानाश्रयत्वेन ज्ञानवृद्धिर्जायत इति चेत् तर्ह्येतद्वृद्धिस्तु स्वाभावायैव तिष्ठति ॥ ६ ॥

दीपनिवृत्तिकाले च प्रकाशोत्कर्षदर्शनम् ।
तथाऽज्ञानविनाशेनोत्कृष्टं ज्ञानं विलीयते ॥ ७ ॥

पदार्थसहितोन्वयः—यथा दीपो निवृत्तिकाले च ( पुनः ) उत्कर्षेण प्रकाशं दर्शयित्वा लीयते तथा ज्ञानमपि स्वोत्कर्षं प्रदर्श्य विलीयते ॥ ७ ॥



कुचे यत्परिपक्वत्वं तत्तन्नाशाय कल्पते ।
प्रफुल्लं जातिपुष्पं च क्षणेन नीरसं भवेत् ॥ ८ ॥

पदार्थसहितोन्वयः—कुचे यत् परिपक्वत्वं ( पूर्णत्वं ) वर्तते तत् तन्नाशायैव भवति । उत प्रफुल्लं जातिपुष्पं च उत्तरक्षणेनैव नीरसभावं प्राप्नुयात् ॥ ८ ॥

उत्पन्न एव कल्लोलो ह्यात्मन्येव विलीयते ।
विद्युत्युदितमात्रायां नाशो न दृश्यते पृथक् ॥ ९ ॥

पदार्थसहितोन्वयः—एव ( इति निश्चयेन ) उत्पद्यमानः कल्लोलो हि ( निश्चयेन ) आत्मनि ( स्वस्वरूपभूते जले ) एव विलीयते । विद्युत उदयमात्रेण नाश एव दृश्यते न पृथक्कालः कोऽपि प्रतीयते ॥ ९ ॥

तथाऽज्ञानविनाशे तु ज्ञानवृद्धिः प्रतीयते ।
सापि च स्वविनाशाय यतते नात्र संशयः ॥ १० ॥

पदार्थसहितोन्वयः—तथा अज्ञानविनाशेन तु ( पुनः ) या ज्ञानवृद्धिः प्रतीयते सा चापि स्वविनाशायैव नात्र संशयः कोऽपि वर्तते ॥ १० ॥

जलस्थलादिकं सर्वं व्याप्तं कल्पांबुना यथा ।
तथा स्वानुभवेनैव ज्ञानं ज्ञाने विलीयते ॥ ११ ॥

पदार्थसहितोन्वयः—यथा कल्पांबुना जलस्थलादिकं सर्वं व्याप्तं भवति तथा स्वानुभवेन स्वात्मनोऽनुभवेनैव ज्ञानमपि स्वस्वरूपज्ञाने विलीयते विशेषेण लीयते ॥ ११ ॥

विश्वस्य व्यापकत्वेन भानुर्यदि विराजते ।
तथा तमोप्यसावेव नान्यद्भवितुमर्हति ॥ १२ ॥

पदार्थसवितोन्वयः—यदा भानुः विश्वे व्यापकत्वेन विराजेत तदा तमोऽपि स एव । न तु तस्मात्पृथग् भवितुमर्हति ॥ १२ ॥

यथा निद्रानिवृत्तौ च निवृत्तिर्जागृतेरपि ।
निर्विकारतया तिष्ठेत् स्वयं जागृतिरेव सा ॥ १३ ॥

पदार्थसवितोन्वयः—यथा निद्रायां निवृत्तायां जागृतिरपि निवर्तेत एव । सा जागृतिः स्वयं निर्विकारतया तिष्ठेत् ॥ १३ ॥

तथाऽज्ञाने निवष्टे च स्वयं ज्ञानं विलीयते ।
स्वप्रकाशे स्वतःसिद्धे ज्ञानाज्ञानं कथं भवेत् ॥ १४ ॥

पदार्थसहितोन्वयः—तथा च ( पुनः ) अज्ञाने विनष्टे सति ज्ञानमपि स्वयं विलीयते । स्वतः-सिद्धे स्वप्रकाशे ज्ञानाज्ञानादिकं कथं ( केन प्रकारेण ) भवेत् ॥ १४ ॥



यथा चंद्रे च चंद्रत्वं वृद्धिं क्षयं च नाप्नुयात् ।
पौर्णिमायाममायां वा न किंचिद् विकरोति तत ॥ १५ ॥

पदा०ऽन्व०—यथा चंद्रे यच्चंद्रत्वं वर्तते तद् वृद्धिं क्षयं वा नाप्नुयात् । अमावास्यायां पौर्णिमायां वा तच्चद्रंत्वं किमपि विकारं न प्राप्नोति ॥ १५ ॥

वृद्धिरन्यप्रकाशेन हानिर्वा तमसा रवेः ।
कदापि न भवेदेव निरुपमः स वै रविः ॥ १६ ॥

प०ऽन्व०—रवेः अन्यप्रकाशेन वृद्धिर्न स्यात् स रविर्वै ( निश्चयेन ) निरुपम एव तस्य केनापि कदाप्युपमा न भवेदेव ॥ १६ ॥

न च ज्ञानेन पुष्टो योऽज्ञानेनापि न यः कृशः ।
ज्ञानाज्ञाने अस्पृष्ट्वैव ज्ञानमात्रः स राजते ॥ १७ ॥

पदार्थसहितोन्वयः—तथा ( पूर्वोक्तप्रकारेण ) अयं ज्ञानमात्रः ( प्रत्यक्स्वरूपः ) ज्ञानेन ( स्वस्वरूपबोधेन ) पुष्टो न भवति ( अज्ञानेनापि यः कृशो न भवति । ज्ञानाज्ञाने अस्पृष्ट्वैव ( तयोः स्पर्शं विनैव ) सः स्वस्वरूपेण राजते ( शोभते ) ॥ १७ ॥

विशुद्धज्ञानमात्रो यः स्वेन चेदनुभूयते ।
तर्हि चक्षुः स्वरूपं हि स्वयमेवानुपश्यति ॥ १८ ॥

प०ऽन्व०—यो विशुद्धज्ञानमात्रः सः स्वेन चेदनुभूयते तर्हि चक्षुः स्वरूपं स्वयमेवानुपश्यति ॥ १८ ॥

नभसा खे प्रवेशं हि वह्निना वह्निज्वालनम् ।
स्वस्कंधारोहणं वै वा कदा कर्तुं न शक्यते ॥ १९ ॥

प०ऽन्व०—हि ( इति निश्चयेन ) नभसि नभःप्रवेशं वह्निना वह्निप्रज्वालनं च स्वस्य स्कंधारोहणं वै वा ( अथवा ) कदा ( कदाचिदपि ) कर्तुं न शक्यते ॥ १९ ॥

यदि चक्षुश्च स्वं पश्येद् रसं स्वादेत वा रसः ।
शृणुयाद्यदि नादः स्वमघटितमिदं खलु ॥ २० ॥

प०ऽन्व०—पुनर्यदि चक्षुश्च स्वं पश्येद् वा ( अथवा ) रसो रसमास्वादयेत् । नादो यदि स्वं शृणुयात् । एतत् सर्वं खलु ( निश्चयेन ) अघटितमेव ॥ २० ॥

प्रकाशयेद्रविः स्वं न स्वेन न फलितं फलम् ।
स्वावघ्राणं न शक्नोति कर्तुं परिमलः स्वयम् ॥ २१ ॥

टीका—रविः स्वं न प्रकाशयेत् फलं स्वं न फलेत् । परिमलः स्वस्यावघ्राणं कर्तुं न शक्नोति ॥ २१ ॥



तथा स्वमपि स्वेनैव ज्ञातुं नैव च शक्यते ।
अतो ज्ञानं विहायैव ज्ञानमात्रोऽवशिष्यते ॥ २२ ॥

प०ऽन्व०—तथा ( पूर्वोक्तप्रकारेण ) आत्मनापि स्वमपि ( निश्चयेन ) स्वेनैव न चैव ज्ञातुं शक्यते । अतःकारणाद् ज्ञानं विहायैव ज्ञानमात्रः ( चिन्मात्रस्वभावः ) अवशिष्यते ॥ २२ ॥

यदि ज्ञानं समर्थं तु स्वावलोकनशीलने ।
अज्ञानमेव तर्हि स्यादत्र कोऽपि न संशयः ॥ २३ ॥

पदार्थसहितोन्वयः—यदि ज्ञानं स्वस्यावलोकनस्वभावे समर्थं स्यात् तर्हि तद्ज्ञानमेव स्यात् अत्र न कोऽपि संशयो वर्तते ॥ २३ ॥

प्रकाशो न कदाप्येव तमोरूपो भविष्यति ।
तर्हि प्रकाशनामासौ कथमर्हति निष्फलम् ॥ २४ ॥

पदार्थसहितोन्वयः—प्रकाशः कदाप्येव ( निश्चयेन ) तमोरूपो न भवति तर्ह्यसौ प्रकाशनाम निष्फलं कथमर्हति ॥ २४ ॥

यत्र नास्तित्वमस्तित्वमित्युल्लेखो न विद्यते ।
कथं स्यान्नैव तच्छून्यमिति वादी तु पृच्छति ॥ २५ ॥

पदार्थसहितोन्वयः—यत्र ( यस्मिन्स्थले ) अस्तित्वं नास्तित्वमित्युल्लेखो न कोपि विद्यते तत् कथं शून्यं नैव स्यादिति तु ( पुनः ) वादी पृच्छति ॥ २५ ॥

ज्ञातं किमपि नास्तीति येन साक्षी स विद्यते ।
तर्हि भोः शून्यसाक्षित्वं कथं शून्यं भविष्यति ॥ २६ ॥

पदार्थसहितोन्वयः—किमपि नास्तीति येनात्मना ज्ञातं स साक्षीति विद्यते ( शून्यप्रकाशकतयाऽनुभूयते ) तर्हि भोः शून्यवादिन तत्साक्षित्वं यस्मिन्वर्तते सः शून्यसाक्षी पुनः कथं शून्यं भविष्यति न कथंचिद् भविष्यतीति भावः ॥ २६ ॥

बौद्धसिद्धांतजं शून्यं यत्प्रकाशे प्रतीयते ।
सन्मात्रं तच्छुद्धबुद्धं शून्यारोपं न चार्हति ॥ २७ ॥

पदार्थसहितोन्वयः—बुद्धानुयायिना यत्कल्पितं शून्यं तद्येन प्रकाशेन प्रतीयते ( दृश्यतया घटवदनुभूयते ) तत् सन्मात्रं शुद्धबुद्धं शून्यारोपविषयं न चार्हति ॥ २७ ॥

दीपविनाशकस्तेन दीपेन सह नश्यति ।
तर्हि दीपस्य नाशो भो वद केन च ज्ञायते ॥ २८ ॥



पदार्थसहितोन्वयः—दीपविनाशकस्तेन दीपेन सह यदि विनश्यति तर्हि दीपस्य विनाशो भो वादिन् केन ज्ञायत इति वद ॥ २८ ॥

निद्रानाशे समुत्पन्ने निद्रितो यदि नश्यति ।
सुखेनैवाहमस्वाप्समिति स भाषते कथम् ॥ २९ ॥

पदार्थसहितोन्वयः—निद्राविनाशे सम्यक्प्रकारेणोत्पन्ने सति तेन सह निद्रितोपि यदि विनश्येत् तर्हि सुखमहमस्वाप्समिति स कथं भाषेत ॥ २९ ॥

घटोऽस्ति वा घटो नास्ति साक्षिणो ह्येष प्रत्ययः ।
तस्याभावो यदि प्रोक्तो माता वंध्या न तस्य किम् ॥ ३० ॥

पदार्थसहितान्वयः—भूतले घटोऽस्ति नास्ति वैवं येन साक्षिणानुभूयते तस्याभावो येन प्रोक्तस्तस्य पुरुषस्य जननी वंध्या किं न भवेत् ॥ ३० ॥

सर्वाभावं च यो वेत्ति तस्याभावो भवेन्नच ।
अस्तिनास्ति विहायैव स्वरूपे स्थातुमर्हति ॥ ३१ ॥

पदार्थसहितोन्वयः—च ( पुनः ) यः ( प्रत्यक् साक्षी ) सर्वस्याभावं वोत्ति तस्याभावो न च कदापि भवेत । अत एवास्तित्वं नास्तित्वं विहायैव स्वरूपेणैव स्थातुमर्हति योग्यो भवति ॥ ३१ ॥

परस्य वा स्वकीयस्य विषयत्वं च नार्हति ।
तस्मादास्तित्वनास्तित्वोल्लेखो नैव भवेत्खलु ॥ ३२ ॥

पदार्थसहितोन्वयः—यश्चिन्मात्रः स्वस्य परस्यापि वा विषयो न भवति तस्यास्तित्वं नास्तित्व मित्युल्लेखो न कोऽपि भवेत्खलु ॥ ३२ ॥

निरंजनवने शेते यस्तं पश्यति कोऽपि न।
स्वदृश्योऽपि भवेन्नैव सोऽभावं तु न चार्हति ॥ ३३ ॥

पदार्थसहितोन्वयः—यः पुरुषो निरंजनवने शेते तं न कोऽपि पश्यति स्वपराविषयत्वेनापि स स्वरूपेणैव स्थास्यति ॥ ३३ ॥

तथैव शुद्धचिन्मात्रः स्वान्यवेद्यो भवेन्न च।
तस्मादेवास्ति नास्तीति वक्तुमेव न शक्यते ॥ ३४ ॥

पदार्थसहितोन्वयः—तथा ( पूर्वोक्तन्यायानुसारेण ) एव ( निश्चयेन ) शुद्धचिन्मात्रोऽन्यवेद्यो न भवेत् स्वमपिच न वेत्ति तस्मात्कारणादेवास्तिनास्तीत्युक्तिविरहितोपि स्यादेव। नास्तीति वक्तुं न शक्यते केनापि ॥ ३४ ॥

दृष्टौ स्वस्मिन् प्रविष्टायां दृष्टित्वं नैव वर्तते।
तथाप्यभावं नो याति स्वरूपेणावशिष्यते ॥ ३५ ॥

पदार्थसहितोन्वयः—यथा स्वदृष्टिः स्वस्मिन् प्रविष्टापि स्वपरेण केनापि न ज्ञायते तथापि तस्याः स्वरूपाभावो न। अपि तु स्वेन शुद्धरूपेण साऽवशिष्यते ॥ ३५ ॥

कृष्णवर्णांधकारे हि सोन्यदृश्यो भवेन्न च ।
व्रजेत्तु न स नास्तित्वमहमस्मीति बुध्यते ॥ ३६ ॥

पदार्थसहितोन्वयः—अन्यदपि शृणु । कश्चित् कृष्णवर्णः कृष्णतमसि प्रविष्टः स्वपरदृष्ट्याऽगोचरोपि सन् नास्तित्वं न व्रजेत् । अपि त्वहमस्मीति बुध्यते ( विजानात्येव ) ॥ ३६ ॥

अस्तिनास्तित्वरूपो यो निर्धारोऽत्र न जायते ।
एवमस्पर्शरूपेण स्वस्मिन्नेव हि तिष्ठति ॥ ३७ ॥

पदार्थसहितोन्वयः—योऽस्तित्वनास्तित्वरूपो निर्धारः ( निश्चयः ) सः अत्र ( स्वस्वरूपे ) न जायते ( नचोत्पद्यते ) एवमस्पर्शरूपेण ( स्पर्शाभावरूपेण ) वा स्वस्मिन्नेव ( स्वमहिम्नि ) एव हि ( इति निश्चयेन ) तिष्ठति ॥ ३७ ॥

स्वरूपे निर्मलाखण्ड आकाशोपि विलीयते ।
तस्मिन्सूक्ष्मे चिदाकाशे सदुल्लेखोऽपि नास्ति वै ॥ ३८ ॥

पदार्थसहितोन्वयः—स्वरूपे ( स्वस्वरूपे ) निर्मले ( शुद्धे ) अखंडे ( परिपूर्णे ) आकाशः ( शून्यस्वभावः ) अपि ( निश्चयेन ) विलीयते ( विशेषेण लीयते ) । तस्मिन्सूक्ष्मे चिदाकाशे सदित्यभिधानमपि वै ( इति निश्चयेन ) नास्ति ( न विद्यते ) ॥ ३८ ॥

यथा स्वनिर्मलत्वेन स्वस्मिन् पुष्करलीनता ।
अविषयोऽपि सोऽन्येषां स्वरूपेणास्ति तत्र वै ॥ ३९ ॥

पदार्थसहितोन्वयः—यथा पुष्करः ( जलाशयः ) स्वनिर्मलत्वेन स्वस्मिन्नेव लीयते । अन्येषामविषयोऽपि संस्तत्र ( तस्मिन्नेव स्थले ) वै ( इति निश्चयेन ) स्वरूपेण तिष्ठति ॥ ३९ ॥

स्वमहिम्नि स्वरूपेण भूमा विराजते तथा ।
अस्तिनास्तिं विनैवासौ स्वयमेव हि शोभते ॥ ४० ॥

पदार्थसहितोन्वयः—तथा भूमा ( ब्रह्मैव ) स्वरूपेण ( स्वस्वरूपेण ) खलु ( इति निश्चयेन ) स्वमहिम्नि ( स्वस्मिन्नेव ) विराजते ( विशेषेण शोभते ) असौ भूमाऽस्तिनास्तीत्यादिशब्दाविषयत्वेनैव स्वयमेव हि शोभते ॥ ४० ॥

यथा निद्रां विहायैव त्यक्त्वापि जागृतिभ्रमम् ।
स्वस्यास्तित्वं भवेदेवास्तित्वभावनया विना ॥ ४१ ॥

पदार्थसहितोन्वयः—यथा निद्रां विहायैव जागृतिभ्रममपि ( निश्चयेन ) त्यक्त्वा स्वस्य पुरुषस्यास्तित्वं भवेदेव विनाऽस्तित्वभावनया ॥ ४१ ॥

कुंभभावे सकुंभेति तदभावे तु निर्घटा ।
भूमिस्तु प्रोच्यते तस्यां नास्त्येतत्कल्पनाद्वयम् ॥ ४२ ॥

पदार्थसहितोन्वयः—कुंभसद्भावे सकुंभा भूमिरित्युच्यते तदभावे तु घटाभाववद् भूतलमित्युच्यते भूमौ त्वेतद्द्वयमपि नास्त्येव ॥ ४२ ॥

भूतलं शुद्धरूपेण निर्द्वंद्वं तु प्रतीयते ।
तथैवात्मस्वरूपं वै भावाभावविवर्जितम् ॥ ४३ ॥

पदार्थसहितोन्वयः—यथा पूर्वोक्तप्रकारेण घटभावाभावादिद्वंद्वकल्पनाविरहितं तु ( पुनः ) शुद्धरूपेण भूतलं वर्तते तथैवेति ( निश्चयेन ) आत्मस्वरूपं वै भावाभावविवर्जितम् ( भावाभावकल्पनाया अविषयमिति भावः ) ॥ ४३ ॥

इतिश्रीज्ञानदेवकृतामृतानुभवस्य संस्कृतभाषांतरे ज्ञानाभेदकथनं नाम चतुर्थं प्रकरणम् ।

---

हरिः ॐ तत्सत् ॥

## पंचमप्रकरणम् ।

यथात्मनिरपेक्षं विषं स्वरूपेण चास्तिवै ।
तथा सच्चित्सुखं चापि स्वरूपेणैव वर्तते ॥ १ ॥

पदार्थसहितोन्वयः—यथा ( येन प्रकारेण ) स्वस्यापेक्षां विनैव विषं च ( पुनः ) स्वरूपेणैव

वर्तते तथा ( तेनैव प्रकारेण ) सच्चित्सुखं च ( पुनः ) अपि ( इति निश्चयेन ) स्वरूपेणैव निरपेक्षतया वर्तते ॥ १ ॥



मृदुत्वं कांतिकाठिन्ये त्रयं हि कनकं यथा ।
माधुर्यं द्रवशुभ्रत्वे त्रीणि पीयूषमेव वै ॥ २ ॥

पदार्थसहितोन्वयः—यथा मृदुत्वं कांतिः काठिन्यमेतत्त्रयं हि ( निश्चयेन ) कनकमेव न तत्पृथक् प्रतीयते तथा च माधुर्यं द्रवः शुभ्रत्वमेतत्त्रयं पीयूषमेव वै ( प्रसिद्धयर्थे ) ॥ २ ॥

कर्पूरस्य यथा खण्डे सावयवे विचारतः ।
दृश्यमानाः पृथङ् नैव मार्दवामोदशुभ्रताः ॥ ३ ॥

पदार्थसहितोन्वयः—यथा सावयवस्य कर्पूरस्य खण्डे विचारतः ( कृते विचारे ) मार्दवमामोदः शुभ्रता च पृथग् नैवानुभूयते ॥ ३ ॥

मृदुत्वं चैव शुभ्रत्वे मृदुत्वे शुभ्रतापि च ।
मकरंदे तथोभे च मकरंदस्तयोरपि ॥ ४ ॥

पदार्थसहितोन्वयः—शुभ्रत्वे मृदुत्वं चैव मृदुत्वे च शुभ्रतापि । तथा च मकरंद उभे । तयोर्द्वयोरापि मकरंदः ॥ ४ ॥

एवं कर्पूरखंडे वै त्रयं भूत्वापि नास्ति च ।
तथा स्वरूपमात्रे हि सत्यादिकं विचारयेत् ॥ ५ ॥

पदार्थसहितोन्वयः—यथैवं वै ( निश्चयेन ) कर्पूरखंडे भूत्वापि त्रयं त्रित्वं च ( पुनः ) नास्ति । तथा स्वस्वरूपे चिन्मात्रे सच्चिदानंदान् हि इति ( निश्चयेन ) विचारयेत् ( विजानीयात् ) ॥ ५ ॥

स्वरूपबोधलिंगानि सच्चित्सुखपदानि वै ।
निरपेक्षस्वरूपे तु सर्वमेतद्विलीयते ॥ ६ ॥

पदार्थसहितोन्वयः——सच्चित्सुखपदानि वै ( निश्चयेन ) स्वरूपबोधलिंगानि ( स्वरूपलक्षणानीति भावः । निरपेक्षस्वरूपे ( असज्जडदुःखद्वैतनिरपेक्षस्वरूपे ) तु ( पुनः ) एतत् सर्वं विलीयते ( विशेषेण लीयते ) ॥ ६ ॥

प्रकाश एव सन्मात्रः सदेव सुखमुच्यते ।
तेषां न कोऽपि भेदोऽस्ति मिष्टांशस्यामृताद्यथा ॥ ७ ॥

पदार्थसहितोन्वयः—प्रकाशः ( ज्ञानं ) एव ( निश्चयेन ) सन्मात्रः ( सत्तामात्रः ) सदेव सुखमुच्यते ( कथ्यते विद्वाद्भिः ) तेषां सच्चित्सुखानां कोऽपि भेदो नास्ति । यथा अमृतस्य मिष्टांशो न प्रथग् भवितुमर्हति ॥ ७ ॥

शुक्लपक्षे कलावृद्धिः प्रतिदिनं प्रतीयते ।
कृष्णपक्षे च तत्क्षयश्चंद्रे नास्ति तु तद्द्वयम् ॥ ८ ॥

पदार्थसहितोन्वयः—शुक्लपक्षे चंद्रस्य कलावृद्धिः प्रतिदिनं प्रतीयते (अनुभूयते) च कृष्णपक्षे तत्क्षयः प्रतीयते चंद्रे तु तद्द्वयं (वृद्धिह्रासादि किमपि) नास्तीति भावः ॥ ८ ॥

आरोपेण सदादीनां तेषां निवारणेन वा ।
स्वरूपभूतं चैतन्यं क्षतिं वृद्धिं न चार्हति ॥ ९ ॥

पदार्थसहितोन्वयः—असज्जडदुःखसापेक्षसच्चिदानंदानामारोपे स्वीकृतेपि तदपेक्षाभावे तेषां सदादीनामपवादेनापि स्वरूपभूतं यत् चैतन्यं वर्तते तद् वृद्धिक्षयादिकं न चार्हति ॥ ९ ॥

यथा प्रवर्षणेनैव बिंदुसंख्या हि दृश्यते ।
तथापि भूतले त्वेव जलमात्रं प्रतीयते ॥ १० ॥

पदार्थसहितोन्वयः—यथा मेघवृष्टचैव (निश्चयेन) बिंदुसंख्या हि (निश्चयेन) दृश्यते (प्रतीयते) तथापि भूतले तु जलमात्रमेव प्रतीयते (अनुभूयते) न तु किमप्यन्यद् वर्तते ॥ १० ॥



तथाऽसन्निवारणार्थं सादिति वदति श्रुतिः ।
जडव्यावृत्तिकार्यार्थं चिदित्यप्यभिधीयते ॥ ११ ॥

पदार्थसहितोन्वयः—तथा श्रुतिरसन्निवारणार्थं सदिति वदति । जडकार्यव्यावृत्त्यर्थं चिदित्यभिधीयते ( कथ्यते ) ॥ ११ ॥

दुःखभावनिवृत्त्यर्थं सुखमित्यभिमन्यते ।
द्वैताभावे तु चाद्वैतं प्रभुवाक्ये सुनिश्चितम् ॥ १२ ॥

पदार्थसहितोन्वयः—दुःखसद्भावनिवृत्त्यर्थं सुखमिति श्रुतिरभिमन्यते । द्वैताभावे तु च ( पुनः ) अद्वैतं प्रभोः ( ईश्वरस्य ) वाक्ये सुनिश्चितम् ( शोभनप्रकारेण निश्चितं भवतीत्यर्थः ॥ १२ ॥

पूर्वोक्ते हि प्रकारे त्वसदादीनां निवृत्तये ।
सच्चिदानंदमद्वैतं स्वरूपं लिंगितं खलु ॥ १३ ॥

पदार्थसहितोन्वयः—पूर्वोक्ते हि प्रकारे त्वसदादीनां ( असज्जडदुःखद्वैतप्रभृतीनां ) निवृत्तये ( निषेधाय ) सच्चिदानंदमद्वैतं स्वरूपं लिंगितं ( स्वरूपलक्षणेन लक्षितं ) भवति खलु ( इति निश्चयेन ) ॥ १३ ॥

स्वतःसिद्धे स्वरूपे तु सच्चिदादिकभारती ।
न वाचिका भवेत्तस्य यतो वाच्यं न चैव तत् ॥ १४ ॥

पदार्थसहितोन्वयः—तु ( पुनः ) स्वतःसिद्धे स्वरूपे सच्चिदादिका भारती या वाणी वर्तते सा तस्य ( चिन्मात्रस्य ) वाचिका न भवेद् यतस्तद् वाच्यं न चैव भवति ॥ १४ ॥

भास्करस्य प्रकाशेन घटादिकं प्रतीयते ।
घटादिना त्वयं चैव प्रकाश्यो न भवेदिति ॥ १५ ॥

पदार्थसहितोऽन्वयः—यथा रवेः प्रकाशेन घटादिकं प्रतीयते ( दृश्यते ) घटादिनात्वयं भास्कर एव प्रकाश्यः ( प्रकाशयितुं योग्यः ) न भवतीति भावः ॥ १५ ॥

तथा परादिवाचां यः स्वयमेव प्रकाशकः ।
तासां तु न भवेदेव स वाच्यो हि न संशयः ॥ १६ ॥

पदार्थसहितोऽन्वयः—तथा ( पूर्वोक्तप्रकारेणैव ) परा पश्यंती मध्यमा वैखरीति यो वाक्समूहस्तस्य यः स्वयं प्रकाशकतया स्वयमेव प्रकाशकः । स चिन्मात्रस्तासां वागादीनां वाच्यो विषयो न भवेदेव । हि निश्चयेनास्मिन्नर्थे न संशयो भवेदेव ( निश्चयेन ) ॥ १६ ॥

नास्ति कस्यापि विषयः प्रमेयत्वं न चार्हति ।
तस्मिन् स्वयंप्रकाशे वै प्रमाणं न परादिकम् ॥ १७ ॥

पदार्थसहितोऽन्वयः—अयं चिन्मात्रः कस्यापि विषयो नास्ति । अत एव वागादीनां प्रमेयत्वं न चार्हति ( प्रमेयत्वाय न योग्यो भवति ) । तस्मिन् स्वयंप्रकाशे स्वस्वरूपे वै ( निश्चयेन ) ताः ( परादयः ) न प्रमाणं भवन्तीति भावः ॥ १७ ॥

प्रमेयपरिच्छेदेन प्रमाणे हि प्रमाणता ।
स्वतःसिद्धे तु चिन्मात्रे प्रमातृत्वं च निष्फलम् ॥ १८ ॥

पदार्थसहितोन्वयः—प्रमेयपरिच्छेदेन ( घटादिविषयभेदेन ) प्रमाणे ( प्रत्यक्षादौ ) प्रमाणता ( यथार्थत्वं ) भवति । स्वतःसिद्धे चिन्मात्रेत्वेतेषां प्रमातृत्वं निष्फलमेव भवति ॥ १८ ॥

एवं स्वरूपज्ञानार्थं प्रवृत्तस्तत्र लीयते ।
प्रकाशकप्रकाश्यत्वं यत्स्वरूपे न वर्तते ॥ १९ ॥

पदार्थसहितोन्वयः—एवं पूर्वोक्तप्रकारेण स्वस्वरूपज्ञानार्थं प्रवृत्तः सच्चिदादिलक्षणः वेदस्तत्र स्वरूपे एव लीयते । यतः प्रकाशकप्रकाश्यत्वं स्वरूपे न वर्तते ( नैव भवति ) इत्यर्थः ॥ १८ ॥

सच्चिदादिपदं तस्माद्वाचकत्वे न सिध्यति ।
स्वयं यतो न वाच्यं स्यादेषा काष्ठा विचारतः ॥ २० ॥

प०ऽन्व०—तस्मात्कारणात् सच्चिदादिपदं वाचकत्वेन न संभवति यतः स्वयं ( आत्मस्वरूपं ) वाच्यं न भवति । एषा विचारतः काष्ठा स्याद् ( विचारस्य पराकाष्ठा स्यात् ) ॥ २० ॥

सच्चिदादिपदानां तु प्रत्यग्बोधनकौशलं ।
ब्रह्मात्मैक्यमभेदेन दर्शयित्वा विनश्यति ॥ २१ ॥

प०ऽन्व०—सच्चिदादिपदानां तु ( पुनः ) प्रत्यग्ब्रह्मबोधनकौशलं ( ब्रह्मात्मैक्यबोधे कौशल्यं ) वर्तते ब्रह्मात्मैक्यं अभेदेन दर्शयित्वा ( बोधयित्वा ) स्वयमेव सच्चिदादिपदं विनश्यति ॥ २१ ॥

अब्ध्युदकं घनो भूत्वा प्रवाहत्वं तु प्राप्य च ।
अब्धौ पुनर्विलीयेत प्रवाहस्तु भवेन्मृषा ॥ २२ ॥

प०ऽन्व०—यथाब्धेरुदकं ( मेघरूपं ) प्राप्य प्रवाहाकारेण नद्यादिभावमायाति । तेन प्रवाहरूपेणाब्धौ विलीयते च । जलं तु पुरापि जलत्वेनास्त्येव । प्रवाहस्तु मृषा भवेत् ॥ २२ ॥

पुष्पनाशः फलोत्पत्त्या तन्नाशो रसपाकतः ।
रसोऽपि तृप्तिदानेन स्वयमेव विनश्यति ॥ २३ ॥

प०ऽन्व०—यथा फलोत्पत्त्या पुष्पनाशो भवति तन्नाशस्तस्य ( फलस्य नाशः ) रसपाकतः स्यादेव । रसोऽपि तृप्तिदानेन स्वयमेव विनश्यति ॥ २३ ॥

निक्षिप्याहुतिमग्नौ हि यथा हस्तोऽवशिष्यते ।
सुखमुत्पाद्य श्रोतॄणां गायनं तूपशाम्यति ॥ २४ ॥

प०ऽन्व०—यथा हस्तो ऽग्नावाहुतिं निक्षिप्य स्वयमेवावशिष्यते ( तिष्ठति ) यथा गायनं श्रोतॄणां सुखम् उत्पाद्य स्वयमुपशाम्यति ॥ २४ ॥

तुण्डं प्रदर्श्य तुण्डाय दर्पणस्तु निवर्तते ।
प्रबोध्य निद्रितं वासौ पुरुषोऽपि च तिष्ठति ॥ २५ ॥

प०ऽन्व०—यथा दर्पणस्तुण्डाय तुण्डं प्रदर्श्य तु ( पुनः ) स्वयमेव निवर्तते । वाऽसौ पुरुषो निद्रितं प्रबोध्य स्वयमपि निष्क्रियत्वेन तिष्ठति ॥ २५ ॥

सच्चिदादिपदान्येवं प्रत्यग्ब्रह्मविबोधने ।
सफलां स्वप्रवृत्तिं वै कृत्वा मौनं व्रजन्ति हि ॥ २६ ॥

पदार्थसहितोन्वयः—हि ( इति निश्चयेन ) पूर्वोक्तप्रकारेण सच्चिदानंदपदानि प्रत्यक्साक्षिणो ब्रह्मणो विशेषेण बोधने ( अपरोक्षीकरणे ) स्वकीयां सफलां प्रवृत्तिं कृत्वा मौनं व्रजन्ति ( गच्छन्ति ) । गूढार्थे ( सूक्ष्मार्थे ) विचारसूचनार्थो वै शब्दः ॥ २६ ॥

यद्यद्वाग्जल्पनं त्वेवं तत्तन्नास्त्येव सर्वतः ।
स्वच्छायया हि स्वं नैव प्रमापयितुमर्हति ॥ २७ ॥

पदार्थसहितोन्वयः---यद् यद् वाग्जल्पनं त्वेवं तत् तत् सर्वतो नास्त्येव । स्वच्छायया स्वं प्रमापयितुं ( स्वस्येयत्तासंपादने ) न कोपि समर्थो भवति ॥ २७ ॥

प्रमापनप्रवृत्तश्चेल्लज्जापि तस्य लज्जते ।
स्वकल्पितेन स्वसिद्धिं कुर्वाणोप्येवमेव सः ॥ २८ ॥

पदार्थसहितोन्वयः—यदि कश्चित् प्रमापने प्रवृत्तश्चेत् तर्हि तस्य लज्जापि लज्जिता भवेदेव । स्वकल्पितेन वस्त्वंतरेण स्वसिद्धिं कुर्वाणोपि स एवमेव भवेत् ॥ २८ ॥

सन्मात्रे वै स्वरूपे त्वसत्संबंधो न जायते ।
तस्या भावे तु सन्मात्रमित्युक्तिर्न च संभवेत् ॥ २९ ॥

पदार्थसहितोन्वयः—तु ( पुनः ) वै ( इति निश्चयेन ) सन्मात्रस्वरूपेऽसत्संबंधो न जायते ( नोत्पद्यते ) तस्य ( असन्मात्रस्य ) अभावे तु ( पुनः ) सन्मात्रमित्युक्तिरपि न च संभवेत् ( नोत्पद्यत इति भावः ) ॥ २९ ॥

जडाभावेऽपि चिन्मात्रमित्युक्तिरपि पूर्ववत् ।
निद्राभावे प्रबोधस्तु मृषा तद्वच्चिदेव हि ॥ ३० ॥



पदार्थसहितोन्वयः—अपि ( निश्चयेन ) जडाभावे सति चिन्मात्रमित्युक्तिरपि ( निश्चयेन )

पूर्ववद् ज्ञातव्या । यथा निद्राभावे प्रबोधः ( जागरणं ) तु ( पुनः ) मृषा ( असदेव ) तद्वज्जडाभावे चैतन्यमप्येवमेव ॥ ३० ॥

सुखमात्रे स्वरूपे वै दुःखगंधो न जायते ।
तस्याभावे सुखं वापि शब्दो नैव प्रवर्तते ॥ ३१ ॥

पदार्थसहितोन्वयः--सुखमात्रे स्वरूपे ( आनंदस्वरूपे ) वै ( निश्चयेन ) दुःखगंधो न जायते ( नोत्पद्येत ) तस्याभावे ( दुःखाभावे ) सुखशब्दोपि ( निश्चयेन ) नैव प्रवर्तते ॥ ३१ ॥

असत्त्वे सद्रूपत्वमजडत्वे चित्त्वमेव वा ।
दुःखाभावे सुखत्वं च वक्तुमेव न युज्यते ॥ ३२ ॥

पदार्थसहितोन्वयः—असज्जडद्वैताभावे तत्सापेक्षसच्चित्सुखमित्युक्तिरपि न युक्ता भवति ॥ ३२ ॥

अधुनाऽद्वैतमात्रे तु तुच्छं वै द्वैतकञ्चुकम् ।
सर्वं भ्रमं विहायैव सुखमेवावशिष्यते ॥ ३३ ॥

पदार्थसहितोन्वयः—अधुना अद्वैतमात्रे ( अद्वैतस्वरूपे ) सापेक्षद्वैतकञ्चुकम् तु ( पुनः ) तुच्छम् । भ्रममात्रं सर्वं विहायैव सुखमात्रमेवावशिष्यते ( निषेधावधिरूपेणास्तीत्यर्थः) ॥ ३३ ॥

एकमेवाद्वितीयं तु ह्युक्ते द्वैतं हि संभवेत् ।
एकं द्वयं विहायैवैकत्वेन च विराजते ॥ ३४ ॥

पदार्थसहितोन्वयः— एकमेवाद्वितीयं तु (पुनः) इत्युक्ते सति द्वैतं हि निश्चयेन संभवेत् (सुष्ठु प्रकारेण भवेत्) अत एवैकं द्वयं विहायैव निश्चयेनैकत्वेन च विराजते (शोभते) ॥ ३४ ॥

औपाधिकसुखेनैव न कोऽपि सुखभाग् भवेत् ।
केवलं सुखमात्रं त्वनुभवितुं न शक्यते ॥ ३५ ॥

पदार्थसहितोन्वयः—एव (निश्चयेन) औपाधिकसुखेन कोऽपि सुखभाग् न भवेत् । तु (पुनः) केवलं सुखमात्रं (सुखस्वरूपम्) अनुभवितुं न शक्यते (न समर्थं भवति द्वैताभावात्) ॥३५॥

यथा वाद्यानुसारेण शक्तिर्विशति पूरुषम् ।
वाद्याभावे तु सा शक्तिः कं च प्रवेष्टुमर्हति ॥ ३६ ॥

पदार्थसहितोन्वयः—यथा वाद्यानुसारेण पुरुषे शक्तिराविशति । वाद्याभावे तु सा शक्तिः कं च प्रवेष्टुं समर्था भवति तु न कमपीति भावः ॥ ३६ ॥



सुखानुभूतिर्भोक्तृत्वे स्वभावेन प्रजायते ।
भोक्त्रभावे तु सा नैव स्वयं भवितुमर्हति ॥ ३७ ॥

पदार्थसहितोन्वयः—भोक्तरि सति सुखानुभूतिः स्वभावेन ( अनायासेन ) प्रजायते ( प्रविशेषेण जायते ) तु ( पुनः ) भोक्त्रभावे सा ( सुखानुभूतिः ) स्वयं नैव भवितुमर्हति ॥ ३७ ॥

मुखे तु दर्पणाभावे नापरोक्षे परोक्षता ।
सापेक्षसुखस्याभावे सुखोक्तिर्नैव चात्मनि ॥ ३८ ॥

पदार्थसहितोन्वयः—मुखावलोकनेच्छया सर्वोपि दर्पणमपेक्षन्ते तस्याभावेपि मुखे यदपरोक्षत्वं वर्तते तत् कस्यापि परोक्षं न भवेदेव । तु ( पुनः ) सापेक्षसुखाभावे सत्यात्मनि सुखोक्तिरपि नैव भवेत् ॥ ३८ ॥

अविद्यावृतसिद्धांतः कुशलश्चेद्विहाय तम् ।
स्वस्याप्यविषयत्वेन स्वयमेवावतिष्ठते ॥ ३९ ॥

पदार्थसहितोन्वयः—अविद्यावृतसिद्धांतस्तं कुशलः पुरुषश्चेद् विहायैव स्वस्याप्यविषयत्वेन ( स्वसंवेद्यत्वाभावेन ) स्वयमेव ( निश्चयेन ) तिष्ठति ॥ ३९ ॥

इक्ष्वंकुरेऽनुद्भूतेपि तत्र यो वर्तते रसः ।
विषयः स्वस्य वान्येषां वा न चैव भवेद्धि सः ॥ ४० ॥

पदार्थसहितोन्वयः—अनुद्भूतेऽपि ( निश्चयेन ) इक्ष्वंकुरे तत्र यो रसो वर्तते स रसः स्वस्य वान्येषां वा विषयः स्वरसस्वादनानुभवविषयो हि ( निश्चयेन ) न चैव भवेत् ॥ ४० ॥

असज्जायां तु वीणायां ध्वनिर्मुग्धोपि वर्तते ।
श्रवणलालसास्यासौ स्वस्यान्यस्य न विद्यते ॥ ४१ ॥

पदार्थसहितोन्वयः—असज्जायां वीणायां तु ( पुनः ) मुग्धो ध्वनिः यो वर्ततेऽपि ( निश्चयेन ) अस्य ( ध्वनेः ) असौ श्रवणलालसा स्वस्यान्यस्य वा न विद्यते ॥ ४१ ॥

यथा पुष्पकलिकायां पुष्पसारस्य लुप्तता ।
भ्रमराविषयः सा तु स्वयं वापि न सेवते ॥ ४२ ॥

पदार्थसहितोन्वयः—यथा पुष्पकलिकायां पुष्पसारो लुप्तो गुप्तरूपेण वर्तते । तु ( पुनः ) सा भ्रमराविषयः सन्नपि तु किंबहुना स्वमपि स्वयं न सेवते ॥ ४२ ॥

यथा पाकेऽपरिपक्के यो रसस्तत्र वर्तते ।
स्वयमेवानुभुयान्न नान्यस्य विषयो भवेत् ॥ ४३ ॥

पदार्थसहितोन्वयः—यथाऽपरिपक्के पाके तत्र यो रसो वर्तते । स स्वयमपि नानुभूयादन्यस्य तु का कथा ॥ ४३ ॥



तथाचैतत्प्रकारेण स्वसुखं नानुसेवते ।
तर्हि तत्र तु नान्येषां विषयत्वं हि वर्तते ॥ ४४ ॥

पदार्थसहितोन्वयः——तथाचैतत्प्रकारेण स्वसुखं नानुसेवते ( स्वस्य स्वयमनुभवविषयो न भवेत् ) तर्हि तत्र तु ( पुनः ) अन्येषां विषयत्वं हि ( निश्चयेन ) वर्तत इति किं वक्तव्यम् । नन्वेवं चेत् तर्हि शून्यमेव स्यात् । मैवं ॥ ४४ ॥

यथा चंद्रश्च मध्याह्ने गगने सुविराजते ।
स्वस्यन्यस्यागोचरोऽपि स्वयं तु वर्तते खलु ॥ ४५ ॥

पदार्थसहितोन्वयः—यथा चंद्रश्च मध्याह्ने गगने सुष्ठु प्रकारेण विराजते स्वस्यान्यस्यागोचरोऽपि खलु ( निश्चयेन ) स्वयं तु वर्तते ॥ ४५ ॥

त्यक्त्वा विशेषसामान्यं भोग्यभोक्तृत्वकल्पनाम् ।
अनुभाव्योऽनुभवो हि स स्वरूपेण विद्यते ॥ ४६ ॥

पदार्थसहितोन्वयः—विशेषसामान्यं भोग्यभोक्तृत्वकल्पनां त्यक्त्वापि सोनुभाव्योनुभवरूपेण हि ( निश्चयेन ) स्वरूपेणैव विद्यते ॥ ४६ ॥

अत्र यद्भाषणं रम्यं तत्समं नास्ति कुत्रचित् ।
यच्छ्रवणान्मौनस्यापि मौनमेवावतिष्ठते ॥ ४७ ॥

पदार्थसहितोन्वयः—अत्र यद्रम्यं भाषणं वर्तते तत्समं कुत्रापि नास्त्येव यच्छ्रवणान्मौनस्यापि मौनमेवावतिष्ठते ( प्राप्यते ) ॥ ४७ ॥

प्रमाणमत्राप्रमाणं दृष्टांतो नैव विद्यते ।
अप्रमेयः प्रमेयः स्वरूपस्थितिरियं खलु ॥ ४८ ॥

पदार्थसहितोन्वयः——अत्र प्रमाणमप्रमाणं भवति दृष्टांतस्तु नैव विद्यते । प्रमेयोऽप्यप्रमेयो भवति । खलु ( निश्चयेन ) इयं स्वरूपस्थितिर्विज्ञेया ॥ ४८ ॥

अजो नित्यश्च ह्येकोयमुपपत्तिस्तु लज्जते ।
अनुपाहिते च तस्मिन्नास्त्येव लक्षणावलिः ॥ ४९ ॥

पदार्थसहितोन्वयः——हि निश्चयेन योऽजो नित्य एकोऽयं । तु ( पुनः ) उपपत्तिः लक्षणावलिः ( भागत्यागादिः ) न विद्यते ( न संभवति ) ॥ ४९ ॥

उपायः पृष्ठतश्चैव पलायते न संशयः ।
स्वप्रत्ययोऽपि वृत्तीनां न भवेत्स्वप्रकाशतः ॥ ५० ॥

पदार्थसहितोन्वयः——तु ( पुनः ) स उपायः पृष्ठतश्चैव ( पृष्ठभाग एव ) पलायते । अत्र न कोपि संशयो वर्तते स्वप्रकाशकत्वाद् वृत्तीनां स्वप्रत्ययः ( निदिध्यासनरूपप्रत्ययावृत्तिः ) अपि न भवेत् स्वतःसिद्धस्वरूपत्वात् ॥ ५० ॥



अभ्रककोशजालानामेकैकपटमोचने ।
सर्वावरणमोक्षे त्वभ्रकं हि नावशिष्यते ॥ ५१ ॥

पदार्थसहितोन्वयः—अभ्रकस्य कोशजालानां पटैकैकावरणमोचन एवंप्रकारेण सर्वावरण-मोक्षे तु हि ( निश्चयेन ) अभ्रकं नावशिष्यते ( न किमपि शेषेण प्रतीयते इति भावः ) ॥ ५१ ॥

यथा च रंभास्तंभेन त्यक्ताः स्वावयवा यदि ।
तेषां त्यागे स्वयमेव सोऽवशेष्टुं न चार्हति ॥ ५२ ॥

पदार्थसहितोन्वयः—यथा च रंभास्तंभेन यदि स्वावयवास्त्यक्तास्तर्हि तेषां त्यागेन स स्वयमेवाप्यवशेष्टुं न चार्हति ( न समर्थो भवति ॥ ५ ॥

अनुभवितानुभाव्ये ये नात्मन्यनयोः स्थितिः ।
एकमेवापि न भवेत्साधनं तत्र कीदृशम् ॥ ५३ ॥

पदार्थसहितोन्वयः—आत्मनि ( स्वरूपे ) अनुभविता चानुभाव्यं चेति ये वर्तेते अनयोः स्थितिर्न विद्यते । यत्रैकमेवापि न भवेत् तत्र साधनकल्पना तु कीदृशी वर्तते । अपि तु न किमपीति सिद्धम् ॥ ५३ ॥

एतावदुक्तया रीत्या स्वरूपे न स्वरूपता ।
तदनुभवरूपे वै कुतो वर्णपदक्रमः ॥ ५४ ॥

पदार्थसहितोन्वयः—एतावदुक्तरीत्या स्वरूपे स्वरूपत्वमपि न संभवति । तस्यानुभवरूपस्य वर्णपदक्रमः कुतो वर्तेत ॥ ५४ ॥

परा हि यत्र वै नास्ति न नादस्तत्र विद्यते ।
उद्भूता त्वोष्ठयुग्मेन वैखरी शिष्यते कथम् ॥ ५५ ॥

पदार्थसहितोऽन्वयः--यत्र ( यस्मिन् चिन्मात्रस्वरूपे ) हि ( निश्चयेन ) परा वै नास्ति तत्र नादस्तु न विद्यते । ओष्ठयुग्मेनोद्भूता या वैखरी सा कथमवशिष्यते । अपि तु नैव ॥ ५५ ॥

एवं स्वतःसिद्धस्वरूपेपि साधनावकाशोऽस्ति चेत् तर्हि विरुद्धमेव स्यात् तं विरुद्धार्थं मूलकार एव स्पष्टयति ।

जाग्रतो जागृतेर्यत्नस्तृप्तस्य भोजनं यथा ।
मध्याह्ने दीपमाला च पक्के क्षेत्रे तु कर्षणम् ॥ ५६ ॥

पदार्थसहितोऽन्वयः—यथा जाग्रतो जागृतेर्यत्नस्तृप्तस्य भोजनप्रयत्नो मध्यदिने दीपप्रदीपनयत्नः पक्के क्षेत्रे कर्षणयत्नाश्च व्यर्था एव भवेयुः । तथा स्वतःसिद्धस्वरूपे साधनप्रयत्नोऽपि विज्ञेयः ॥ ५६ ॥

अस्योपरि स्वमोक्षार्थं क्रियते यदि साधनम् ।
स्वापरोक्ष्यं तस्य नास्ति निष्फलश्च वाग्विस्तरः ॥ ५७ ॥



पदार्थसहितोऽन्वयः—अस्योपरि पूर्वोक्तार्थादनंतरं स्वमोक्षार्थं यदि साधनं क्रियते चेत् तर्हि तस्य पुरुषस्य वस्तुयाथात्म्यस्वरूपज्ञानं नास्तीति सिद्धं तन्निमित्तको व्यापारोपि निष्फल एव ॥ ५७ ॥

यस्याज्ञानं तु नष्टं वै शब्दस्तस्य निरर्थकः ।
अन्यबोधसमर्थश्चेत्तर्हि तत्रापि श्रूयताम् ॥ ५८ ॥

पदार्थसहितोन्वयः—तु ( पुनः ) यस्य पुरुषस्याज्ञानं नष्टं वै ( इति निश्चयेन ) तस्य पुरुषस्य शब्दो निरर्थकः । एतत्तु सत्यं मुमुक्षुबोधार्थं तद्दृष्ट्या शब्दे सार्थक्यं स्वीकर्तुं युक्तामिति चेत् तर्हि तत्रापि विचारः श्रवणतः श्रूयताम् ॥ ५८ ॥

तथापि वस्तुस्मारकत्वं शब्दे वर्तत एवेत्याशंक्याह ।
तथापि ह्येतन्मात्रेण नोत्कृष्टस्तु सर्वथा ।
वस्तुस्मारकरीत्याऽपि शब्दः कीर्तिं न चार्हति ॥ ५९ ॥

पदार्थसहितोन्वयः—तथाप्येतन्मात्रेण स तु नोत्कृष्टः सर्वथैव भवितुमर्हति । वस्तुस्मारकत्वेन शब्दे साफल्यं चेत् तर्हि तदपि न संघटते स्मर्तुं च विस्मर्तुमहो न शक्या सुप्त्यादिषु स्वप्रभयास्ति सा चित् ॥ ५९ ॥

इति श्रीज्ञानदेवकृतामृतानुभवस्य संस्कृतभाषांतरे सच्चिदानंदविवरणं नाम पंचमं प्रकरणम् ।

॥ हरिः ॐ तत्सत् ॥

# षष्ठं प्रकरणम् ।

श्रृणु भो वत्स शब्दस्तु सर्वथैवोपयुज्यते ।
अमूर्तदर्शनायासावादर्शो हि भवेत्खलु ॥ १ ॥

टीकाः—पूर्वप्रकरणे सच्चिदानंदनिरूपणेन ब्रह्मणः सद्रूपत्वं चिद्रूपत्वमानंदरूपत्वं च यत्कथितं तेन स्वरूपं त्रिधा न भवति । दृश्यमानो भेदः :केवलं शाब्दिकोऽस्ति । शब्दश्च:मिथ्याभूतो वर्तत इति शब्दखण्डनप्रकरणं चिकीर्षमाणः प्रथमं पशुमण्डनन्यायेन शब्दस्योपयोगं कथयति द्वादशभिः श्रृण्वित्यारभ्य अमूर्तदर्शनाय ( अमूर्तमव्यक्तस्वरूपं दर्शयितुम् ) ॥ १ ॥

सचक्षुः पश्यत्यादर्शे तत्राश्चर्यं न वर्तते ।
शब्दादर्शस्त्वनेत्रं हि स्वं वपुर्दर्शयत्यसौ ॥ २ ॥

टीकाः—सामान्यादर्शाच्छब्दरूपादर्शस्य विशेषं दर्शयितुमाह सचक्षुरिति । अस्य शब्दादर्शस्य साधनेन प्रज्ञाचक्षुरपि स्वरूपसाक्षात्कारं करोत्येव ॥ २ ॥



शब्दश्च रविरेवास्ति ह्यव्यक्तकुलदीपकः ।
आकाशे यद्गुणेनैवाकाशत्वमभिधीयते ॥ ३ ॥

पदार्थसहितोन्वयः—अव्यक्तकुलदीपकः ( अज्ञानतत्कार्यप्रकाशकः ) यद्गुणेन ( शब्दगुणेन ) ॥ ३ ॥

प्रेक्षमाणे विचारेण खपुष्पवच्च दृश्यते ।
जगदेतत्तु तत्कार्यं न कार्येण स गण्यते ॥ ४ ॥

पदार्थसहितोन्वयः—अस्मिन् शब्दे विचारेण प्रेक्ष्यमाणे सति स आकाशपुष्पतुल्योऽभावरूपो गण्यते ( निश्चीयते ) ॥ ४ ॥

विधिनिषेधयोर्मार्गौ शब्ददीपेन दर्शितौ ।
बन्धमोक्षविवादेऽसौ कलिरेव न संशयः ॥ ५ ॥

पदार्थसहितोन्वयः—विधिनिषेधयोर्मार्गौ ( कर्तव्याकर्तव्ये ) बन्धमोक्षविवादे ( बन्धस्य मोक्षस्य च साधनानां निश्चितौ ) कलिः ( नारदो विवादकारणम् ) ॥ ५ ॥

शुद्धे हि कल्पयत्येषो ऽविद्यातत्कार्यसंभ्रमम् ।
तत्र विचार्यमाणे तु नार्थः कोपि हि लभ्यते ॥ ६ ॥

पदार्थसहितोन्वयः—एषः ( शब्दः ) शुद्धे ( परब्रह्मणि ) तत्र ( अविद्यातत्कार्यसंभ्रमे ) ॥ ६ ॥

शुद्धे जीवत्वमारोप्य शिवत्वं च प्रयच्छति ।
शब्दो हि मंत्रवित्प्राज्ञो भवयक्षं निवारयेत् ॥ ७ ॥

टीका––शुद्धस्वरूपे जीवत्वं कल्पयित्वा तत्सापेक्षं शिवत्वं शुद्धाय प्रदत्तं शब्देन । भवयक्षं ( जन्ममरणरूपपिशाचम् ) ॥ ७ ॥

देहात्मबुद्धिबद्धो यः शब्देनैव स मुच्यते ।
शब्देनैव स्वमाप्नोति शब्दो हि भास्करद्युतिः ॥ ८ ॥

पदार्थसहितोन्वयः––देहेति । देहात्मबुद्ध्या ( देह आत्मबुद्धिं कृत्वा ) स्वं ( देहादिसंबंधाश्लिष्टं निरुपाधिकं स्वस्वरूपं ) भास्करद्युतिः ( सूर्यवत्प्रकाशस्वभावः ) ॥ ८ ॥

आत्मोदयेन रात्रिं वै विनाशयति भास्करः ।
उपमेयो न तेनासौ शब्दोऽत्येति हि भास्करम् ॥ ९ ॥
प्रवर्तयत्यसौ द्वंद्वमविरोधेन सर्वथा ।
अतश्च शब्दतुल्यो हि भवितुं कोपि नार्हति ॥ १० ॥

टीका––स्वसामर्थ्येन रविमप्यतिक्रामति शब्द इत्याहात्मेति द्वाभ्याम् । दिनारंभाय रात्रिनाशं रविः करोत्यतस्तस्मिन् वैषम्यं दृश्यते । शब्दस्तु प्रवृत्तिनिवृत्त्यादिद्वंद्वानां विरुद्धानामपि प्रवर्तन एकमेवाविरोधि कारणं भवति । तथा चैक एव शब्दो यतिविप्रादीनां कलंजभक्षणतैलाभ्यंगस्नानादि निमित्तेन दूषणं कथयति परं यज्ञे बलिप्रतिपदादौ च तदेवादूषणं कथयति ॥ ९ ॥ १० ॥

ब्रह्मविद्यासाहाय्यार्थं स्वयमेव विनश्यति ।
अतः शब्दस्य कौशल्यं वर्णयितुं न शक्यते ॥ ११ ॥

टीका——ब्रह्मात्मैक्यबोधं कृत्वा शब्दः स्वयं निःशब्दो भवति ॥ ११ ॥

किंबहुना तु शब्दार्कः प्रसिद्धो निजदर्शने ।
तथापि स्वस्वरूपे वै तत्संबन्धो न वर्तते ॥ १२ ॥

टीका—निजदर्शने स्वरूपसाक्षात्कारेऽयंशब्दोऽपरोक्षः सूर्य एवास्ति । एवं शब्दस्य महत्त्वं कथयित्वोत्तरग्रंथेन तत्खंडनं कर्तुमुच्यते तथेति । तथापि वस्तुयाथात्म्यविचारे कृते सति । तत्संबन्धः ( शब्दसंबन्धः ) न वर्तते स्वरूपस्य शब्दाविषयत्वात् । जातिगुणक्रियासंबन्धवान् पदार्थ एव शब्द-विषयो भवति । स्वरूपं च न तथा ॥ १२ ॥

स्वप्रकाशे स्वतःसिद्धे शब्दकार्यं न वर्तते ।
निरपेक्षे चिदानन्दे शब्दापेक्षापि का भवेत् ॥ १३ ॥

पदार्थसहितोन्वयः—स्वतःसिद्धे ( अकृत्रिमस्वरूपे ) स्वप्रकाशे ( आत्मप्रकाशे ) चिदानन्दे ( सच्चिदानन्दरूपे ) निरपेक्षे ( अपेक्षाशून्ये ) स्वयं पूर्णे सति न शब्दकार्यापेक्षास्तीति भावः ॥ १३ ॥

स्मृतिविस्मृतिभावस्तु स्वभिन्नस्य प्रतीयते ।
स्वस्मिंस्तु स्मरणादेश्च नावकाशोऽभिधीयते ॥ १४ ॥

टीका—स्मरणदाने यदि शब्दस्य कौशल्यं कथ्यते तर्हि स्मरणविस्मरणे आत्मान्यवस्तुन एव भवतो न स्वस्य। अतः स्वरूपस्मरणे शब्दप्रयोजनं नास्तीत्याह स्मृतीति ॥ १४ ॥

कथमात्मा स्वरूपं च स्मरेद्वा विस्मरेत्खलु।
स्वादास्वादौ न वर्तेते रसनायां यथैव वै ॥ १५ ॥

टीका—उक्तमर्थमेव दृष्टान्तेन दृढयति कथमिति। स्वादास्वादाविति रसनायाः स्वस्याः स्वादग्रहणं स्वादाग्रहणं वा न संभवति यतः सा स्वयमेव स्वादरूपा वर्तते ॥ १५ ॥

यथा जाग्रदवस्थायां स्तो न निद्रा च जागृतिः।
तथा बोधस्वरूपे न स्मृतिविस्मृतिभावना ॥ १६ ॥

टीका—दृष्टांतान्तरमाह यथेति। जाग्रदवस्थायां निद्राया अभावो विद्यते तस्मात् सा जागृतिरपि निद्राविरोधिनी जागृतिर्न भवति ॥ १६ ॥

रविरूपे यथा नास्ति दिनरात्र्योश्च कल्पना।
तथैव स्वस्वरूपे तु स्मरणास्मरणे न च ॥ १७ ॥

टीका—रवेर्दृष्टान्तेन तमेवार्थं दृढयति ॥ १७ ॥

स्मृतिविस्मृत्यभावे तु कथं शब्दो हि स्मारकः।
तस्मात्तु चिद्घने शुद्धे शब्दकार्यं न विद्यते ॥ १८ ॥

टीका—स्वरूपे स्मरणास्मरणयोरभावे सति स्वरूपस्य स्मारकः शब्दोऽस्तीति भाषापि न युज्यत इत्याह स्मृतीति स्पष्टम् ॥ १८ ॥

अविद्यानाशकत्वेन शब्दोत्कर्षो मतो यदि ।
विचारदृष्ट्या दृष्टे तु शब्दे तथ्यं न विद्यते ॥ १९ ॥

टीका—अविद्याया नाशे शब्दोऽतीवोपयोग्यस्तीति मन्येत चेत्तर्हि तदपि न युज्यत इत्युच्यतेऽविद्येति ॥ १९ ॥

निवृत्ते शब्देनाज्ञान आत्मा स्वरूपमाप्नुयात् ।
एतद्भाषणकालेऽपि भ्रान्तत्वं वै प्रतीयते ॥ २० ॥

टीका—शब्देनाज्ञानस्य निवृत्तौ जातायामेव स्वरूपप्राप्तिर्भवतीत्युक्तिरपि वक्तुर्भ्रमं दर्शयति ॥ २० ॥

निशां निवर्त्य सूर्यस्तु स्वोदयं कुरुते खलु ।
एषो ह्यनृतवाग्जल्पः सत्समाजे न मन्यते ॥ २१ ॥

टीका—उक्तार्थे सूर्यदृष्टान्तं ददाति निशेति स्पष्टम् ॥ २१ ॥

तथैवैषाप्यविद्या तु नाशं शब्देन नार्हति ।
न चात्मा निजभावं हि प्राप्नोति नूतनं खलु ॥ २२ ॥

टीका—दार्ष्टान्तिकमाह तथेति । नित्यासिद्धस्यात्मनः प्राप्तिर्न संभवतीत्याह नेति ॥ २२ ॥

अजातपुत्र्यविद्येयं तया निन्द्यं कृतं यदा ।
सा शशशृंगबाणेन वन्ध्यापुत्रेण नाशिता ॥ २३ ॥

टीका—अविद्याया अत्यन्ताभावरूपत्वमाहाजातेति । अजातपुत्री ( अविद्यमाना कन्या ) निंद्यं ( अविहिताचरणम् ) ॥ २३ ॥

सत्यत्वं यदि वर्तेत प्रतीतेपींद्रकार्मुके ।
तर्हि कोऽपि धनुर्धारी रज्ज्वां तत् किं न सज्जयेत् ॥ २४ ॥

पदार्थसहितोन्वयः—प्रतीतेपींद्रकार्मुके ( यद्यपींद्रधनुर्दृग्गोचरं भवति तथापि तत्र धनुर्ज्यादिकं किमपि वस्तुतो नास्त्येव ) यदि सत्यत्वं वर्तेत ( यदि तद्धनुर्वास्तविकं धनुर्भवेत् ) तर्हि कश्चिद् धनुर्धारी ( वीरः ) तत् किं न सज्जयेत् ( तत्सज्जीकर्तुं न शक्नुयात् किम् ) तद्धनुर्नाममात्रमेव न तु वास्तविकं तथैवाविद्येति भावः ॥ २४ ॥

यद्यगस्तेर्विलासस्य मृगांबु विषयो भवेत् ।
तर्ह्यविद्याविनाशोऽपि शब्देनैव प्रजायते ॥ २५ ॥



पदार्थसहितोन्वयः—यदि मृगांबु ( मृगजलं ) अगस्तेर्विलासस्य ( अगस्तिमुनेरुदधिपानरूप-

क्रियायाः ) विषयो भवेत् ( गोचरं स्यात् ) तर्हि शब्देन एव ( इति निश्चयेन ) अविद्याविनाशोऽपि प्रजायेत ( अविद्याया अपि नाशः शक्यः स्यात् ) यथागस्तिमुनेरसतो मृगांबुनः पानमशक्यं तथैव शब्देनाविद्यानाशः स्यादित्युक्तिरपि केवलं वाचारंभणमेव ॥ २५ ॥

अविद्या युक्तिवादेन निवृत्ता हि भवेद्यदि ।
गंधर्वनगरं तर्ह्यनलयोगेन दह्यते ॥ २६ ॥

पदार्थसाहितोन्वयः—युक्तिवादेन ( शब्दरूपवेदानुकूलतर्केणापि ) यद्यविद्या निवृत्ता भवेत् ( अत्यंताभावरूपाया अविद्याया विनाशः संपाद्येत ) तर्हि गंधर्वनगरमनलयोगेन दह्यते ( तर्हि गंधर्वनगरस्य दहनमाग्नियोगेन स्यात् ) ॥ २६ ॥

दीपेऽथवा प्रदीप्तेप्यंधकारो यदि विद्यते ।
तर्ह्यविद्यापि शब्देन विनाशमर्हति क्वचित् ॥ २७ ॥

पदार्थसाहितोन्वयः—अथवा यदि प्रदीप्ते दीपेंऽधकारो विद्यते ( अंधकारस्य सद्भावः स्यात् ) तर्हि क्वचित् ( कदाचिदपि ) अविद्याशब्देन विनाशमर्हति ( शब्दोऽप्यविद्याया नाशं कुर्यात् ) ॥ २७ ॥

दीपस्य विषयः सूर्यो भवेद्यदि प्रसंगतः ।
शब्दस्य विषयोप्यात्मा भवेत्तर्हि न संशयः ॥ २८ ॥

पदार्थसहितोन्वयः—प्रसंगतः ( यदाकदाचिदपि ) यदि सूर्यस्तमोव्याप्तः सन् दीपस्य विषयो भवेत् तर्हि शब्दोप्यज्ञाननिवृत्त्यात्मानं प्रकाशयितुं समर्थः स्यात् । यथा दृष्टांतस्यासंभव एव तथा दार्ष्टांतस्याप्यसंभव एवेति ज्ञेयम् ॥ २८ ॥

यत्र च्छायाप्रतीतिर्न तत्र वै नास्ति किञ्चन ।
परं यत्र प्रतीतिः स्याद्वर्तते तत्र किं खलु ॥ २९ ॥

पदार्थसहितोन्वयः—यत्र छायाप्रतीतिर्न ( यस्मिन् स्थले छायापि न दृग्गोचरा ) तत्र सद्भावरूपः कोऽपि पदार्थो न विद्यत इति सर्वानुभवसिद्धम् । परं यत्र प्रतीतिः स्यात् ( किन्तु यस्मिन् स्थले छाया दृग्गोचरा भवति ) तत्र खलु किं वर्तते ( तस्मिन् स्थलेऽपि खल्विति निश्चयेन कश्चित् सद्भावरूपः पदार्थो विद्यते किम् । अपि तु नैव ) ॥ २९ ॥

यथा स्वप्नः प्रतीतस्तु काले तस्मिन् मृषा खलु ।
तद्वत्प्रतीतिकालेऽप्यविद्याजालं मृषैव हि ॥ ३० ॥

पदार्थसहितोन्वयः—यथा प्रतीतः स्वप्नस्तु ( स्वप्नेऽनुभूता नानाविषयाः ) तस्मिन् काले ( स्वप्नावस्थायां प्रतीतिसमयेपि ) खलु मृषा ( निश्चयेन मिथ्याभूता एव ) तद्वत्प्रतीतिकालेऽपि ( तथैव भ्रान्तदृष्ट्या प्रत्यक्षमनुभूयमानमनुभवसमयेपि ) अविद्याजालं मृषैव ( अविद्याऽविद्याकार्यं च सर्वमेव मिथ्याभूतं न तत्र सत्यस्य लेशोपि विद्यते ॥ ३० ॥

रिक्तमेव गृहं पूर्णमपि मायाविभूषणैः ।
दिगंबरे कृते नग्ने को विशेषो भवेत्खलु ॥ ३१ ॥

पदार्थसहितोन्वयः—मायाविभूषणैः ( इंद्रजालेन निर्मितैराभासमात्रैर्मिथ्यारूपैर्भूषणैः ) पूर्णमपि गृहं रिक्तमेव वर्तते । अथवा दिगंबरे नग्ने कृते सति ( पूर्वमेव वसनरहितस्य नग्नपुरुषस्य नग्नत्वं कृतमित्युच्येत चेत् ) तर्हि को विशेषो भवेत्खलु ( तस्यामुक्त्यां वाचारंभणमात्रत्वात् किमप्यधिकतरं स्यात् किम् ) ॥ ३१ ॥

मनोनिर्मितपाकेनानेकशो भोजनं कृतम् ।
उपवासात्परं तत्र नान्यद्भोक्त्रा कृतं खलु ॥ ३२ ॥

पदार्थसहितोन्वयः—अनेकशो मनोनिर्मितपाकेन ( केवलं मनसा पक्वैर्नानाविधैः षड्रसैरन्नैः ) भोजनं कृतं ( यदि कश्चित् पुरुष आत्मनः क्षुच्छांतिं कुर्यात् ) तत्र भोक्त्रा तर्हि ( तस्मिन् भोजने तेन भोजन कर्त्रा पुरुषेण ) खलु ( निश्चयेन ) उपवासात्परमन्यन्न कृतं ( केवलमुपवास एव कृतो न कापिक्षुच्छांतिः कृता ) ॥ ३२ ॥

मृगांबु यत्र न दृष्टं शुष्कत्वं तत्र वर्तते ।
प्रतीतमाशु तद्यत्र वर्तते तत्र किं जलम् ॥ ३३ ॥

पदार्थसहितोन्वयः—यत्र मृगांबु न दृष्टं ( यस्यां भूमौ मृगजलाभासोत्पादकवस्तूनामभावे मृगजलाभासो न विद्यते ) तत्र शुष्कत्वं वर्तते ( सा भूमिः शुष्कैव दृश्यते ) यत्र तदाशु प्रतीतं ( परं यस्यामुषर-

भूमौ मध्याह्ने प्रखरं तपति चण्डभास्करे मृगजलाभासः सत्वरमनुभूयते ) तत्र जलं वर्तते किम् ( तस्य तात्त्विकं जलमस्ति किम् । अपि तु नास्त्येव ) ॥ ३३ ॥

प्रपंचे हि प्रतीतेऽपि सत्यश्चेत्स भविष्यति ।
तर्हि वै चित्रमेघेन नदा नद्योऽपि वाहिताः ३४ ॥

पदार्थसहितोन्वयः—प्रतीतेपि हि प्रपंचे ( यद्यप्यहंताममतादिःसर्वः प्रपंचः प्रत्यक्ष इवानुभूयतेऽज्ञजनः। स सत्यश्चेद् भविष्यति ( तथापि तत्र प्रपंचे सत्यत्वं न वर्तते ) कुतः । तत्राह यदि स्वप्नवद्भासमानः प्रपंचः सत्यः स्यात् तर्हि चित्रमेघेन नदा नद्योपि वाहिताः ( तर्हि प्रत्यक्षमेघवद्भासमानश्चित्रालिखितो मेघोपि प्रभूतजलवृष्ट्या नदान् ) नदींश्च भृशं पूरयित्वा नदनदीद्वारा तज्जलं समुद्रं नेतुं समर्थो भविष्यति ) ॥ ३४ ॥

प्रतीतिरेव सत्या चेत्सत्यो गगननीलिमा ।
तस्मादेषा प्रतीता न सत्या भवितुमर्हति ॥ ३५ ॥

पदार्थसहितोन्वयः—प्रतीतिरेव सत्या चेत् ( यद्याभासमात्रेणैव पदार्थसत्यत्वं वर्तेत ) तर्हि गगने प्रतीयमानं नीलत्वमपि किं न सत्यं भवेदपि तु भवेदेव । परं वस्तुतो नीलवर्णस्याभास एव विद्यते न तत्र किमपि सद्रूपेणास्ति । तस्मादेषा प्रतीता ( एतस्मात्कारणादेषाऽविद्या यद्यप्यज्ञजनैः प्रत्यक्षमनुभूयते ) तथापि सत्या भवितुं नार्हति ( किंतु सा मृषैव न तत्र लेशमात्रमपि सत्यत्वं विद्यते ) ॥ ३५ ॥

अविद्या स्वाभिधानेन स्वाभावं वै प्रकाशयेत् ।
तेन स्वकीयमिथ्यात्वं सत्यमेव प्रबोधयेत् ॥ ३६ ॥

पदार्थसहितोन्वयः—स्वाभिधानेन अविद्या ( न विद्यते नास्तीत्यविद्येत्यात्मनो नाम्नैव ) स्वाभावं वै ( निश्चयेनात्मनो नास्तितामेव ) द्योतयति । तेन स्वकीयमिथ्यात्वं ( तेन कारणेनेयमात्मनो मृषाभावं ) स्वयमेव प्रबोधयेत् ( स्वनाम्नैव घोषयति नात्र प्रमाणांतरापेक्षास्ति ) ॥ ३६ ॥

तदनिर्वचनीयत्वं गंधर्वनगरोपमम् ।
तस्मात्सा तु निजाभावं स्वनाम्ना हि प्रसाधयेत् ॥ ३७ ॥

पदार्थसहितोन्वयः—तदनिर्वचनीयत्वं ( साऽविद्या शब्देन कथयितुमशक्यैव वर्ततेऽस्तित्वाभावात् ) एतत्तस्या अनिर्वचनीयत्वं गंधर्वनगरोपमम् ( यथा गंधर्वनगरं केवलं शब्दमात्रमेवास्ति न तत्र किमपि वास्तवम् ) तस्मात् सा स्वनाम्ना निजाभावं ( आत्मनोऽविद्यमानत्वं ) प्रसाधयेत् ॥ ३७ ॥

एषा यदि हि सत्या स्यान्निर्धारार्हा न सा कथम् ।
भूतलं घटयोगेन चिह्नितं दृश्यते खलु ॥ ३८ ॥

पदार्थसहितोन्वयः—एषा ( अविद्या ) यदि सत्या स्यात् । तर्हि सा निर्धारार्हा कथं न ( सैवंभूतेति तस्याः स्वरूपनिश्चयः किं न कर्तुं शक्यो भवति ) भावरूपवस्तुनः स्वरूपनिश्चये दृष्टांतमाह भूत-

लमिति । घटयोगेन ( भावरूपेण घटेन ) भूतलं चिह्नितं दृश्यते ( अत्र घटोऽस्तीति निर्धारायैतावान् भूभागो घटयुक्तोऽवलोक्यते ) ॥ ३८ ॥

आत्मा विद्यां निहन्त्येव ह्येतन्न विदुषां मतम् ।
यथा सूर्यस्तमोजालमपाहृत्य न काशते ॥ ३९ ॥

टीका—आत्माऽविद्यां निहन्ति ( स्वयंप्रकाशश्चिदात्माऽविद्यायाः समूलं नाशं कृत्वा ततः स्वज्ञानेन विराजत इति ) एतद्विदुषां मतं न ( आत्मतत्त्वापरोक्षसाक्षात्कारवन्तो विद्वांसो न कदापि मन्यन्ते ) अत्र दृष्टांतमाह यथेति । सूर्यस्तमोजालमपाहृत्य न काशते ( येन सूर्येण स्वप्नेऽपि तमो न दृष्टं स किं तमसो नाशं कृत्वा पश्चात् स्वतेजसा प्रकाशते । अपि तु नैव । स सदैव प्रकाशस्वरूप एव ) तथैवात्मस्वरूपे नाविद्या विद्यते कुतस्तर्हि तस्या नाशः ॥ ३९ ॥

अविद्या हि मृषैवैषा यदि भ्रांतान् विमोहयेत् ।
ज्ञानिनस्तु यथात्वेन जानन्त्यनृततां खलु ॥ ४० ॥

पदार्थसहितोन्वयः—यद्यप्येषाऽविद्या भ्रांतान् ( अविज्ञातात्मतत्त्वान् मूढान् ) विमोहयेत् ( भ्रांत्या स्वसत्यत्वे विश्वासं कारयितुं प्रयतेत ) तथापि मृषा ( सा मिथ्याभूतैव ) ज्ञानिनः ( विज्ञातात्मतत्त्वा विद्वांसः ) यथात्वेन ( तत्त्वतः ) अनृतां जानन्ति ( तस्या मिथ्यात्वं विदुः ) ॥ ४० ॥

अविद्याऽविद्यमानासौ विचारिताप्यनन्तशः ।
अतस्तु शब्दकौशल्यं केनोद्देशेन वर्तते ॥ ४१ ॥

पदा०ऽन्व०—अनंतशः (अनंतप्रकारैः) विचारितापि (तस्या निर्धारे कृतेऽपि) असावविद्याविद्यमाना (अभावरूपैव) अतोऽविद्याया अभावोऽस्ति । तस्मात् शब्दकौशल्यं (अविद्यानाशाय शब्दस्य युक्तिवादः) केनोद्देशेन वर्तते (किंनिमित्तको भवति । अविद्याया अभावे तन्नाशाय शब्दकौशल्यं नावश्यकमित्यर्थः) ॥ ४१ ॥

यथा मृगांबुपाने वा गगनालिंगनेपि वा ।
चुंबने प्रतिबिंबानां खपुष्पनाशनेपि वा ॥ ४२ ॥
पुरुषार्थो हि पुरुषाणां विफलत्वेन भवेत्खलु ।
अविद्याया विनाशेपि शब्दो हि विफलस्तथा ॥ ४३ ॥

टीका—अविद्याया नाशे शब्दवैफल्यमाह सदृष्टांतं यथेति द्वाभ्याम् ॥ ४२-४३ ॥



अहो विद्वत्प्रयत्नोयमविद्याया विनाशने ।
गगनचूर्णयत्नेन सदृशः स्यात्सदा मतः ॥ ४४ ॥

टीका—शब्दसाहाय्येनाविद्याया विनाशे विदुषां यत्नो गगनस्य चूर्णकरणयत्नवद् हास्यास्पदः स्यादित्युक्तमहो इति ॥ ४४ ॥

अविद्याऽजातरूपा या का युक्तिस्तन्निषेधने ।
मध्याह्ने तमसः शांत्यै दीपोत्सवस्तु कीदृशः ॥ ४५ ॥
निषेधने त्वविद्याया या वै युक्तिः प्रवर्तते ।
व्यर्थैव सा भवेन्नित्यं भविष्यत्पुरवासवत् ॥ ४६ ॥

टीका—उक्तमर्थमेवान्याभ्यां दृष्टांताभ्यां दृढयत्यविद्येति द्वाभ्याम् ॥ ४५-४६ ॥

निवृत्तौ चेदविद्यायाः शब्दे प्रमाणता भवेत् ।
स्वमिथ्यात्वेन साऽविद्या निवृत्तास्ति हि तत्त्वतः ॥४७॥

टीका—अविद्या स्वयमेव मिथ्या सती न तस्या निवृत्तौ शब्दप्रयोजनमस्तीत्याह निवृत्ताविति ॥ ४७ ॥

ब्रह्मात्मैक्यविबोधेन शब्दस्योत्कर्षता यदि ।
तर्हि मित्रविरोधोऽत्र स्वस्य प्राप्तिर्न युज्यते ॥४८॥

प०ऽन्व०—ब्रह्मात्मैक्यविबोधेन (ब्रह्मणस्तत्पदलक्ष्यस्य। आत्मनस्त्वंपदलक्ष्यस्य। ऐक्यं तयोः

मुख्यसामानाधिकरण्यं तस्य विबोधेन तदर्थमित्यर्थः ) भागत्यागलक्षणेनोपाधिभागत्यागेन शब्दस्यो-त्कर्षता भवेच्चेत् । तर्हि हे मित्र । अत्र ( अस्मिन् सिद्धांतस्थले ) विरोध एव प्रतीयते । स्वस्य ( स्वप्रकाशनित्योपलब्धस्य प्रत्यग्भूम्नः ) शब्दनिमित्तेन प्राप्तिर्न युक्ता भवति ॥ ४८ ॥

स्वस्योद्वाहस्तु स्वेनापि दृश्यते नैव कर्हिचित् ।
सूर्यग्रहणं सूर्येण यथा नैव प्रतीयते ॥ ४९ ॥

पदार्थसहितोन्वयः—यथा स्वस्य विवाहः स्वेनापि तु ( पुनः ) कदाचिदपि नैव दृश्यते । उत सूर्यग्रहणं सूर्येण यथा कुत्रापि नैव प्रतीयते ॥ ४९ ॥

खे हि नभःप्रवेशश्च सिंधौ सिंधोश्च लीनता ।
एतत्तु न भवेदेव नात्मलाभस्तथा परे ॥ ५० ॥

पदार्थसहितोन्वयः—यथा नभसि नभःप्रवेशो न संभवति । यथा सिंधौ च सिंधोः प्रवेशोपि न संभवति स्वयमेव पूर्णस्वभावात् । तथात्मलाभोऽपि परे ( परमात्मनि ) न भवेदेव नित्यप्राप्तस्व-भावात् ॥ ५० ॥

अप्प्राशनेन तु तृप्तं यद्यपि स्याच्चराचरम् ।
न स्वप्राशनवाञ्छापि वारिणोऽस्ति कदाचन ॥ ५१ ॥

पदार्थसहितोन्वयः—यद्यप्यप्प्राशनेन ( वारिपानेन ) तु ( पुनः ) चराचरं तृप्तं स्यात् । तथापि स्वपाशनवाञ्छापि वारिणः कदापि न स्यात् ॥ ५१ ॥

षष्ट्युत्तरत्रिंशताहे दिनमेकं न विद्यते ।
भास्करे भास्करप्राप्तिः कृता येन प्रयत्नतः ॥ ५२ ॥

टीका—संवत्सरस्य त्रीणि शतानि षष्टिश्च दिनानि वर्तन्ते तेषां मध्ये नैकोपि दिवसः शूराच्छूरतरो वर्तते यो भास्करे भास्करप्राप्तिं कुर्यात् ॥ ५२ ॥

वैश्वानरः प्रकुपितस्त्रैलोक्यं दहति क्षणात् ।
नैवं तस्य तु सामर्थ्यं स्वदहने कदापि वै ॥ ५३ ॥

पदार्थसहितोन्वयः—वैश्वानरः प्रकुपितः सन् क्षणमात्रेण त्रैलोक्यमपि दहत्येव । तु ( पुनः ) तस्य स्वदहने सामर्थ्यं कदाचिदपि वै ( निश्चयेन ) न भवति ॥ ५३ ॥

विनादर्शं विधातापि भवेन्नैव स्वसंमुखः ।
तथैव वस्तु स्वप्राप्तिं कदाचिदपि नार्हति ॥ ५४ ॥



पदार्थसहितोन्वयः—विधाताप्यादर्शं विना स्वसंमुखो यथा नैव भवेत् तथा वस्तुनोऽपि स्वप्राप्तिः कदाचिदपि न योग्या भवति ॥ ५४ ॥

दृष्टिं दृष्टिर्हि पश्येच्चेद्रसोपि स्वादयेद्रसम् ।
प्रबुद्धस्य प्रबोधः स्यादात्मलाभस्तदा भवेत् ॥ ५५ ॥

पदार्थसहितोन्वयः—चेत् ( यदि ) दृष्टिर्दृष्टिमवलोकयेत् रसोऽपि निश्चयेन रसमास्वादयेत् । अथवा यदि प्रबुद्धस्य प्रबोधः स्यात् तदात्मलाभोपि स्यात् ॥ ५५ ॥

चंदने न हि तल्लेपो रंगः स्वेन न रंजितः ।
मौक्तिकं भूषितं नैव मुक्ताभूषणकेन वा ॥ ५६ ॥

पदार्थसहितोन्वयः—चंदने चंदनस्य लेपो न स्यात् । रंगोऽपि स्वयं रंजितो न भवेदेव । मौक्तिकमपि यथा स्वभूषणेन भूषितं न भवति ॥ ५६ ॥

हेम्ना हेमपरीक्षा स्याद् दीपो दीपं प्रकाशयेत् ।
रसो रसे निमज्जेच्च भवेदेतत्तु दुर्घटम् ॥ ५७ ॥

पदार्थसहितोन्वयः—तथैव यदि हेम्नः स्वपरीक्षा स्वेन स्याद् दीपोपि स्वं प्रकाशयेच्चेत् । रसो रसे निमज्जेत् । एतत्तु सर्वं दुर्घटमेव ॥ ५७ ॥

मदनारेः समर्थस्य शीर्षं चन्द्रेण भूषितम् ।
चन्द्रस्तु स्वशिरारोहं कर्तुं नार्हति कर्हिचित् ॥ ५८ ॥

पदार्थसहितोन्वयः—समर्थस्य मदनारेः ( महादेवस्य ) शीर्षं चन्द्रेणालङ्कृतमस्ति। अत एव स शशिशेखर इति उच्यते । तु ( परन्तु ) चन्द्रः स्वशीर्षमारुह्य कदाचिदपि स्वशिरो न भूषयति ॥५८॥

स्वयमात्मा चिदानन्दः पूर्णत्वेन विराजते ।
स्वप्राप्तिर्दुर्घटा चैव बहुयत्ने कृतेऽपि च ॥ ५९ ॥

पदार्थसहितोन्वयः—चिदानन्द आत्मा ( ज्ञानसुखस्वरूप आत्मा ) पूर्णत्वेन स्वयं विराजते ( अपरिच्छिन्नतया सर्वव्यापकत्वेन स्वसत्तया प्रकाशमानोऽस्ति ) एवंभूतस्य सच्चिदानन्दस्वरूपस्यात्मनः स्वप्राप्तिः ( आत्मलाभः ) पूर्वोक्तदृष्टांतकथितार्थानामिव बहुयत्ने कृतेपि दुर्घटा ( असंभवनीया ) एव ॥ ५९ ॥

पश्यति स्वं न चक्षुर्वै द्वैताभावाद्धि चक्षुषः ।
न पश्यति तथा वस्तु स्वप्रभं स्वं स्वभावतः ॥ ६० ॥

पदार्थसहितोन्वयः—चक्षुः स्वं ( आत्मानं ) वै ( निश्चयेन ) न पश्यति । कुतः । चक्षुषो द्वैताभावात् ( यतो न चक्षुषो द्वैतं द्वित्वं विद्यते ) एकमेव चक्षुः स्वं द्रष्टुं न समर्थं स्यात् । तथा स्वप्रभं वस्तु ( स्वयंप्रकाश आत्मा ) स्वं ( आत्मानं ) न पश्यति। स्वभावतः ( इत्यनायासेनैव सिद्धम् ) ॥६०॥



आदर्शः स्वीयसौंदर्यं स्वास्मिन् यद्यवलोकयेत् ।
स्वस्वरूपं तु तर्ह्यात्माऽनुभवेत्स्वयमेव हि ॥ ६१ ॥

पदार्थसहितोन्वयः—यद्यादर्शः स्वीयसौंदर्यं ( आत्मनो मनोहरं रूपं ) स्वस्मिन्नवलोकयेत् ( स्वस्वरूपे द्रष्टुं शक्तो भवेत् ) तर्ह्यात्मा स्वरूपानुभवं स्वयं कुर्यात् ॥ ६१ ॥

ब्रह्माण्डबाह्यं यद्वस्तु तच्छिद्येत तु कालतः ।
तथापि शस्त्रधारा तु स्वां न हि च्छेतुमर्हति ॥ ६२ ॥

पदार्थसहितोऽन्वयः—ब्रह्मांडबाह्यं यद्वस्तु ( यद्यपि किञ्चिद्वस्तु ब्रह्माण्डकटाहस्य बहिर्देशे स्यात् ) तत् तु ( तथापि तद्वस्त्वपि ) कालतश्छिद्येत ( कस्माच्चित्कालादनन्तरं तस्य च्छेदनं शक्यं स्यात् ) तथापि शस्त्रधारा तु ( परन्तु खड्गादिशस्त्रस्यातितीक्ष्णापि धारा ) स्वां छेत्तुं नार्हति ( स्वीयं छेदनं कर्तुं न कदापि समर्था भवेत् ) ॥ ६२ ॥

रसस्यास्वादने जिह्वा यद्यपि कुशला भवेत् ।
स्वास्वादने न सामर्थ्यं रसमात्रा स्वयं यतः ॥ ६३ ॥

पदार्थसहितोन्वयः—जिह्वा यद्यपि रसस्यास्वादने ( नानारसानामनुभवकरणे ) कुशला भवेत् । तथापि स्वास्वादने ( स्वरसानुभवं कर्तुं ) न सामर्थ्यं ( सा योग्या न भवति ) कुतः। यतः स्वयं रसमात्रा ( येन हेतुना जिह्वा केवलं रसरूपैवास्ति न तस्या रसात् किमपि व्यतिरिक्तं रूपमस्ति ततो हेतोः ) न स्वेन स्वास्वादनं शक्यम् ॥ ६३ ॥

तथैव सच्चिदानन्दे नित्यसिद्धे परात्मनि ।
स्वप्राप्तिमात्मा कुर्वीत शब्दो ह्येषोऽपि दुर्घटः ॥ ६४ ॥

पदार्थसहितोन्वयः—तथैव ( पूर्वोक्तदृष्टांतसिद्धार्थानुरोधेन ) सच्चिदानन्दे नित्यसिद्धे परात्मनि ( आत्मस्वरूपे सति ) आत्मा स्वप्राप्तिं कुर्वीत ( आत्मनात्मलाभो भवेत् ) एष शब्दोऽपि दुर्घटः ( असंभवनीयः ) ॥ ६४ ॥

स्वतःसिद्धस्वरूपोऽयं न प्रमाणमपेक्षते ।
प्राप्त्यप्राप्तिकथा तत्र जल्पमात्रावगम्यते ॥ ६५ ॥

पदार्थसहितोन्वयः—अयं ( आत्मा ) स्वतःसिद्धस्वरूपः सन् स्वरूपसिद्धावन्यापेक्षामकुर्वाणो नित्यासिद्धः सन् प्रमाणं नापेक्षते ( तस्य सिद्धौ प्रमाणापेक्षा न विद्यते ) तत्र ( तस्मिन्नात्मानि ) प्राप्त्यप्राप्तिकथा ( आत्मलाभो जातो न जातो वेत्येषोक्तिः ) जल्पमात्रावगम्यते ( वाचारंभणमेवेति ( ज्ञातव्यम् ) ॥ ६५ ॥

अतस्तु शब्दयोगेन नात्मा ब्रह्मेति धीर्भवेत् ।
आत्मा ब्रह्म स्वतःसिद्धं शब्दोऽत्र घटवद्भवेत ॥ ६६ ॥

पदार्थसहितोन्वयः—अत आत्मसिद्धौ प्रमाणापेक्षा नास्त्यतो हेतोः शब्दयोगेन ( शब्दस्य साहाय्येन ) आत्मा ब्रह्मेति धीर्न भवेत् ( आत्मानुभवः स्यादिति मतिस्त्वशक्यैव वर्तते । न कोऽपि

धीमानेवंविधां मतिं कुर्यात् ) आत्मा स्वतःसिद्धं ब्रह्मैवास्ति । अतोऽत्र ( आत्मप्राप्तिविषये ) शब्दो घटवद् भवेत् ( यथा घटो दृश्योऽस्ति तथायं शब्दोऽपि दृश्यत्वान्न कदापि द्रष्टुरात्मनः स्वरूपप्रापकः स्यात् ) ॥ ६६ ॥

यथा मध्याह्नदीपो वै तमो नैव विनाशयेत् ।
आत्मप्राप्तौ तथा चायं शब्दो नैवोपयुज्यते ॥ ६७ ॥

पदार्थसहितोन्वयः—यथा मध्याह्नसमये दीपस्य तमोनाशे नोपयोगः । तथा स्वयंप्रकाशस्यात्मनो लाभे शब्दोऽपि एवमेव ॥ ६७ ॥

मृषाऽविद्या स्वरूपेण निषेधं सापि नार्हति ।
आत्मा नित्योपलब्धश्च तस्य प्राप्तिश्च दुर्घटा ॥ ६८ ॥

टीका—अविद्या या स्वरूपेण ( वस्तुत एव ) मृषैव । सा निषेधं नार्हति ( तस्या मिथ्याभूताया निषेधः किमात्मकः । अपि तु स नास्त्येव । नित्यप्राप्तस्यात्मनः प्राप्तिरसंभवनीयैव ॥ ६८ ॥

उभाभ्यां हि प्रकाराभ्यां शब्दो व्यर्थो भवेत् खलु ।
यथा कल्पांतकालाप्सु नौघभागो हि विद्यते ॥ ६९ ॥

पदार्थसहितोन्वयः—उभाभ्यां प्रकाराभ्यां ( एवमविद्याया अनिषेधकत्वेनात्मनो लाभस्याप्राप-

कत्वेन चोभयथापि ) शब्दो व्यर्थो भवेत्खलु ( शब्दो व्यर्थ एव ) अत्र परिपूर्णे ब्रह्मणि शब्दोपि न विद्यत इति शब्दस्यापृथग्भावसूचको दृष्टांतः कल्पांबुना योजितः । यत्र कल्पांबुन्ययं सरिदोघ इदं गांगं वारीत्यादि न किमपि पृथङ् निर्णेतुं शक्यमस्ति ॥ ६९ ॥

अथ शब्दप्रवृत्तिर्या सा किंनिमित्तका भवेत् ।
अविद्यात्मविषये तु शब्दो नैव प्रतीयते ॥ ७० ॥

पदार्थसहितोन्वयः—अथ ( अपि च ) या शब्दप्रवृत्तिः ( अयं शब्द एवमर्थक इत्यादिरूपा या जगति शब्दस्य रूढिर्दृश्यते ) सा किंनिमित्तका भवेत् ( तत्र किमपि निमित्तं विद्यते किम् ) न किमप्यस्ति शब्दस्यैव मृषात्वात् । अविद्यात्मविषये ( अविद्याया विषय आत्मविषये वा ) शब्दो नैव ( शब्दो निरर्थक एवेति भावः ) ॥ ७० ॥

वन्ध्यासुत इति शब्दः शब्दमात्रो हि विद्यते ।
आकाशालंबनं चैव शाब्दिकं केवलं हि तत् ॥ ७१ ॥

टीका:—यथा वन्ध्यासुत इत्ययं शब्दोऽयथार्थ एवास्ति वन्ध्यासुतस्याभावात् । हस्तेन वाकाशस्य ग्रहणमपि केवलमुच्चारमात्रं तथैव शब्दप्रवृत्तिरपि निष्फलैव ॥ ७१ ॥

निरर्थकाखिला युक्तिर्निवृत्तिप्राप्तिकारिका ।
यथा रंगे सुचित्रं वै मृषाप्रतीतिमात्रकम् ॥ ७२ ॥

टीका—निवृत्तिप्राप्तिकारिका ( अविद्यानिवृत्तिकारिका वात्मप्राप्तिकारिका वा ) अखिला युक्तिः ( सर्वं शब्दजालं शास्त्रमपि ) निरर्थका ( अर्थहीना वाचारंभणमेव ) कुशलेन चित्रकारेण रंजितं शोभनं चित्रं केवलं रंग एवास्ति चित्रभासस्तु मृषैव ॥ ७२ ॥

ज्ञानाज्ञानप्रतीतिस्तु शब्दमात्रैव ज्ञायते ।
यथा चित्रवनं रंगात् पृथङ्‌ नैव हि दृश्यते ॥ ७३ ॥

टीका—एष जडप्रत्ययोऽज्ञानं तस्य निवृत्तिस्तु ज्ञानमित्येवंप्रकारको योऽनुभवः स केवलं शाब्दिक एव न यथार्थ इति बोद्धव्यम् । चित्रे दर्शितं वनं केवलं रंगमात्रमेव ॥ ७३ ॥

अहो शब्दैकमूलं हि भ्रमरूपमिदं जगत् ।
तन्निवृत्तिर्भवेदेव नष्टेऽभ्रे दुर्दिनं यथा ॥ ७४ ॥

टीका—अहो ( इत्याश्चर्ये ) हि ( यतः ) इदं जगच्च शब्दैकमूलं ( केवलं शब्दमात्रप्रतीतं न शब्दाद् व्यतिरिक्तवास्तवस्वरूपं ) किंतु भ्रमरूपं ( भ्रम एव रूपं यस्य तद् भ्रममात्रस्वरूपमस्ति ) तस्माद् भ्रमनिरासे तन्निवृत्तिर्भवेदेव । अत्र दृष्टांतः । यथाभ्रे नष्टे सति दुर्दिनमप्यनायासेनैव निवर्तते ॥ ७४ ॥ इति श्रीज्ञानदेवकृतामृतानुभवस्य संस्कृतभाषांतरे शब्दखंडनं नाम षष्ठं प्रकरणम् ॥

॥ हरिः ॐ तत्सत् ॥



## ॥ अथाज्ञानखण्डनं नाम सप्तमं प्रकरणम् ॥

ज्ञानागाधप्रकाशे ह्यज्ञानशब्दः प्रतीयते ।
विना ज्ञानेन तं शब्दं न कोऽपि श्रोतुमर्हति ॥ १ ॥

टीका:——हि यस्मात् । अज्ञानशब्दो ज्ञानरूपागाधप्रकाशे सत्येव प्रतीयते न तु स्वतंत्रतया । अस्मिन्नर्थे गौडपादीयकारिका—नात्मभावेन नानेदं न स्वेनापि कथंचन । पृथङ्ग नापृथक् किंचिदिति तत्त्वविदो विदुः ॥ १ ॥ कारिकाटीका—नानात्वेन प्रतीयमानमिदं जगदात्मरूपेण कथंचिदपि नास्त्येव । स्वतंत्रसत्ताकमपि नास्ति । तस्य सत्तात्मनः पृथग् वाऽपृथग् वा न संभवेदिति तत्त्वविदां मतम् ॥ १ ॥ ज्ञानेन विना तमज्ञानशब्दं कोऽपि श्रोतुं योग्यो न भवति । अज्ञानेन विनैवैतद् दृश्यं प्रतीयते कथमिति चेच् शृणु । गौडपादीयकारिका——प्रत्येतव्यप्रतीत्योश्च भेदः प्रामाणिकः कुतः । प्रतीतिमात्रमेवेदं भाति विश्वं चराचरम् ॥ १ ॥ वेदान्तसिद्धांतमुक्तावल्याम्——ज्ञानज्ञेयप्रभेदेन यथा स्वप्नः प्रतीयते । विज्ञानमात्रमेवैतत्तथा जाग्रच्चराचरम् ॥ १ ॥ संमतिश्लोकयोष्टीका——यत इदं चराचरं विश्वं केवलं प्रतीतिमात्रं वर्तते ततः प्रत्ययविषयस्य तस्य प्रत्ययमात्रस्य च न कोपि प्रमाणतो भेदो विद्यते । यथा ज्ञानरूपेण ज्ञेयरूपेण च स्वप्नः प्रतीयते तथेदं जागृत्यां भासमानं चराचरात्मकं जगद् विज्ञानमात्रमेव ॥ १ ॥

यथा तमसि खद्योतप्रकाशो वै प्रतीयते ।
तथैवात्मप्रकाशेनाज्ञानभासो भवत्यपि ॥ २ ॥

टीका—तमसि खद्योतप्रकाशवज्ज्ञानेनाज्ञानं प्रतीयत एवेत्यर्थः । अयं दृष्टांतो व्यतिरेकेण बोद्धव्यः । कुतः । तथानुभवात् त्रिपादस्येति श्रुतेश्च ॥ २ ॥

यथा स्वप्नप्रतीतिस्तु साक्षिदीप्त्या हि सिध्यति ।
तथैवाज्ञानशब्दोऽपि ज्ञानभासेन भासते ॥ ३ ॥

टीका—यथा स्वप्नप्रत्ययः केवलं साक्षिणः प्रकाशेनैव सिध्यति तथैवाज्ञानशब्दो ज्ञानेनैव भासते । अत्रायं पुरुषः स्वयंज्योतिर्भवतीति श्रुतेः ॥ ३ ॥

आत्मन्यज्ञानस्वीकारे तस्य विकारित्वं स्यादिति चेच्छृणु ।

स्वरूपेऽध्यस्तमज्ञानं नैवकार्यक्षमं भवेत् ।
गंधर्वनगरेऽश्वादिर्नारोहणाय कल्पते ॥ ४ ॥

टीका—यथा गंधर्वनगरेऽध्यस्ता अश्वादय आरोहणादिकार्याय योग्या न भवन्ति तथात्मन्यध्यस्ताज्ञानेनापि तस्य विकारित्वं न स्यात् ॥ ४ ॥



अस्मिन्नर्थेऽन्यमपि दृष्टांतमाह मायेति ।

मायाविना कृतं सर्वं न तत्कार्यक्षमं भवेत् ।
तथा कल्पितमज्ञानं कार्यं कर्तुं न चार्हति ॥ ५ ॥

टीका—मायाविना कृतं ऐंद्रजालिकनिर्मितम् । अन्यत्सुगमम् ॥ ९ ॥
अज्ञानं प्रातीतिकमपि नेति साधयति स्वेति ।

स्वप्रकाशस्वरूपेऽज्ञानं वाचारंभणं तु वै ।
नोचेच्चंद्रप्रकाशे हि प्रतीयेत मृगांबुधिः ॥ ६ ॥

टीका—स्वप्रकाश आत्मज्ञानं वाग्व्यापार एव । नो चेत्तर्हि चंद्रप्रकाशे मृगजलसमुद्रः प्रतीयेत ॥६॥
आत्मनि ज्ञानाज्ञानयोर्वाग्व्यापारत्वमाह पुनरिति ।

पुनश्च निजरूपे हि ज्ञानमज्ञानमेव वै ।
वंध्यापुत्रौ प्रतीयेते सहजातौ समत्वतः ॥ ७ ॥

टीका—स्वस्वरूपे ज्ञानमप्यज्ञानमेव । एवं ज्ञानाज्ञाने वंध्यापुत्रावेव । समत्वं त्वत्यंताभावरूपेण ज्ञातव्यं विद्वद्भिरित्यर्थः ॥ ७ ॥



एषोऽस्तु सम्यक् सिद्धांतः स्वीकृत्याथाज्ञसंभ्रमम् ।
खण्डितं यदि चाज्ञानं तथा हि ज्ञानमेव वै ॥ ८ ॥

टीका——सांप्रतमस्तु ज्ञानविचारः । अधुनाऽज्ञजनसंभ्रमं स्वीकृत्यादावज्ञानविचारे प्रयतितव्यम् । विचारेणाज्ञानेऽसिद्धे सति ज्ञानमप्येवमेव । एतदुक्तमं सत्यं यत्र किंचिन्न विद्यते ॥ ८ ॥

अज्ञानं स्वप्रकाशे तु सत्यत्वेन हि स्याद्यदि ।
तर्हि ज्ञानावृतत्वेन जगदांध्यं च संभवेत् ॥ ९ ॥

टीका—यदि प्रकाशघने स्वरूपेऽज्ञानं सत्यं स्यात् तर्हि तेनावृते सति स्वरूपभूते ज्ञानेऽखिलोपि जगद्व्यवहारो न संभवेत् प्रकाशकस्याभावात् ॥ ९ ॥

यत्र तिष्ठति त्वज्ञानं तत्र ज्ञानं न भासते ।
अज्ञानस्य स्वभावोऽयं नोचेत् तत्तु भवेन्मृषा ॥ १० ॥

टीका—अज्ञानस्यैतल्लक्षणमेव यद् यत्र तदस्ति तत्र ज्ञानप्रकाशो न संभवति । नोचेदज्ञानं किमात्मकं स्यात् । ज्ञानप्रकाशस्तु सर्वत्रैव प्रतीयते ॥ १० ॥

शास्त्रकारैस्तु ब्रह्मैव कथितो हि तदाश्रयः ।
ब्रह्माश्रितं तदज्ञानं तदावृणोति वा इति ॥ ११ ॥

टीका—ब्रह्मैवाज्ञानस्याश्रयः । तदाश्रितं चाज्ञानं स्वाश्रयमावृणोतीति शास्त्रकारा वदंति । आश्रयत्वाविषयत्वेन यदुक्तं वाक्ये तत्र विचारे कृते सति भासकत्वेन सत्प्रतीयते ब्रह्म तत्र तु नावरणं

संभवेत्। यथा भास्करे प्रतीयमानं मेघपटलं तेनैव प्रकाश्यते। अतस्तस्यावरणं तत्र न संभवत्येव। अत्र संमतिश्लोकः। घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा मन्यते निष्प्रभं चातिमूढः। तथा बद्धवद्भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोहमात्मा ॥ १ ॥ इति हस्तामलकः ॥ ११ ॥



अज्ञानं ज्ञानमावृत्य स्वयं यद्यवशिष्यते।
तर्हि तस्यानुभूतिं न कर्तुं केनापि शक्यते ॥ १२ ॥

टीका—यदि ज्ञानमावृत्याज्ञानमवशिष्टं स्यात् तर्हि ज्ञानं विना तदस्तीत्युक्तिः कथं संभवेत्। अज्ञानसिद्धिरेव न स्यात् ॥ १२ ॥

अज्ञानं स्वयमेव प्रकाशेतेति शंकां परिहरत्यज्ञानमिति।

अज्ञानं तु जडत्वेन न स्वप्रकाशने क्षमम्।
प्रमाणं त्वेव तत्कार्यं तेन तन्न प्रकाशितम् ॥ १३ ॥

टीका—अज्ञानं जडं ज्ञानान्यत्वाद् दृश्यत्वात्। जडत्वात् परप्रकाश्यत्वाद् घटादिवद् न स्वप्रकाशनयोग्यम्। प्रमाणं त्वज्ञानकल्पितत्वात् तद्भासकं न भवत्येव ॥ १३ ॥

स्थाणुनिखननवदज्ञानाभावं दृढयति यद्यीति।

यद्यज्ञानं स्वमात्मानं स्वयमेवावलोकयेत्।
तर्ह्येतदुक्तिमात्रे हि विरोधो दृश्यते खलु ॥ १४ ॥

टीका—अज्ञानं स्वसाधकं स्वयमेव न भवत्येवात्माश्रयादिदोषसंभवात् ॥ १४ ॥

यद्यात्मा ज्ञानमात्रोऽयमज्ञानेन जडो भवेत् ।
तर्हि त्वज्ञानशब्दोऽयं कस्याग्रे वै प्रतीयते ॥ १५ ॥

टीका—यद्यात्मन्यज्ञानं वस्तुतः स्यात् तर्ह्यात्मा जडो भवेद् यतः स ज्ञानमात्रः । ज्ञानावरणे च प्रत्यायकाभावादज्ञानं नैव युक्तं भवतीत्यर्थः ॥ १९ ॥

यथा भानुर्हि मेघौघैराच्छादितो भवेद्यदि ।
तर्हि बत घनः कस्य प्रकाशेन प्रकाश्यते ॥ १६ ॥

पदार्थसहितोन्वयः—यथा यदि भानुर्हि ( निश्चयेन ) मेघौघैः ( मेघसमूहैः ) आच्छादितो भवेत् तर्हि बत ( इति खेदे ) घनः ( मेघः ) कस्य प्रकाशेन प्रकाश्यते ॥ १६ ॥

यदि स्वसममज्ञानं चिन्मात्रं कुरुते खलु ।
तर्हि तस्य जडत्वेनाज्ञानसिद्धिर्भवेन्न हि ॥ १७ ॥

टीका—यद्यात्माऽज्ञानेन जडो भवेत्तर्हि तेनाज्ञानसिद्धिः कथं भवेत् ॥ १७ ॥
ज्ञानमज्ञानेनावृतमज्ञानं च प्रकाशत इति विरुद्धवक्तारमुपहसति नेत्रेति ।

नेत्रे पटलयुक्तेऽपि सुष्ठ्वेव प्रेक्षणं भवेत् ।
एतद्भाषणमेतेषां निरर्थकं प्रतीयते ॥ १८ ॥

टीका—नेत्रे पटलयुक्ते सत्यपि प्रेक्षणं सुष्ठ्वेव भवेदित्येतेषां ( भ्रमिष्ठानां ) एतद्भाषणं निरर्थकं प्रतीयते ॥ १८ ॥

उत समित्समूहे च ह्यग्निः प्रज्वालितो यदि ।
ज्वालाकाशगता वै तु तत्स्पर्शो नेंधने भवेत् ॥ १९ ॥

पदार्थसहितोन्वयः—उत ( किंवा ) यदि समित्समूहे च हि ( निश्चयेन ) अग्निः प्रज्वालितः । तस्य ज्वाला वा आकाशं गता तस्याग्नेः स्पर्शास्त्विन्धने न भवेत् ॥ १९ ॥

मम गृहेऽन्धकारस्त्वमर्यादत्वेन विद्यते ।
गृहांतरगतं भावं पश्याम्येव ह्ययत्नतः ॥ २० ॥

पदार्थसहितोन्वयः—मम गृहेंधकारस्त्वमर्यादत्वेन ( अतीव ) विद्यते । तर्ह्यपि गृहांतरगतं ( गृहे स्थितं ) भावं ( पदार्थमात्रं ) हि । अयत्नतः ( प्रयासेन विनैव ) पश्यामि ॥ २० ॥

जाग्रद्भावे च निद्रा हि मध्याह्ने रात्रिदर्शनम् ।
एतत्तु भाषणं सर्वमर्थशून्यं भवेद्यथा ॥ २१ ॥

पदार्थसहितोन्वयः—जागृतौ निद्रा च मध्याह्ने रात्रिदर्शनमेतद्भाषणं तु यथा सर्वमर्थशून्यं भवेत् ॥ २१ ॥

तथाऽज्ञानतमो वै तु प्रकाशघन आत्मनि ।
न कदा संभवत्येव किमर्थमत्र संशयः ॥ २२ ॥

पदार्थसहितोन्वयः—तथा प्रकाशघन आत्मनि त्वज्ञानतमो वै कदा न संभवत्येव । अत्र किमर्थं संशयः ॥ २२ ॥

एवं ज्ञानघने शुद्धेऽज्ञानावरणकल्पना ।
स्याच्चेन्न्याये तु व्यर्थत्वमनायासेन सिध्यति ॥ २३ ॥

पदार्थसहितोन्वयः—एवं ज्ञानघने शुद्धे चेत् ( यदि ) अज्ञानावरणकल्पना स्यात् तर्हि त्वनायासेन न्याये व्यर्थत्वं सिध्यति ॥ २३ ॥

अज्ञानं हि तमोरूपमात्मा वै तु प्रभाघनः ।
परस्परविरोधे च तयोर्नैक्यं भविष्यति ॥ २४ ॥

पदार्थसहितोन्वयः—अज्ञानं हि ( निश्चयेन ) तमोरूपमात्मा तु प्रभाघनो वै । तयोरेवं परस्परविरोधे चैक्यं न भविष्यति ॥ २४ ॥

स्वप्नजागृतियुग्मं तु स्मरणास्मरणे तथा ।
यदि शीतोष्णमेकत्र समत्वं स्थातुमर्हति ॥ २५ ॥

पदार्थसहितोन्वयः—यदि स्वप्नो जागृति तथा स्मरणमस्मरणं शीतमुष्णं वा ससुखं ( सुखेन ) एकत्र स्थातुमर्हतः ॥ २५ ॥

तर्ह्यात्मा ज्ञानरूपो योऽज्ञानमात्मस्वरूपतः ।
अंगीकरोति भाषैषा लज्जास्पदं भवेत्खलु ॥ २६ ॥

पदार्थसहितोन्वयः—यद्येवं स्यात् तर्हि ज्ञानरूपो न तु ज्ञानवानात्माऽज्ञानमात्मरूपतोंऽगीकरोत्येषा भाषा खलु लज्जास्पदं भवेत् ॥ २६ ॥

मृत्युजीवनयोरैक्यं संभवेदेव चेत्खलु ।
तर्ह्यात्मा स्वस्वरूपेणाज्ञानेन सह स्थास्यति ॥ २७ ॥

टीका—यथा मृत्युजीवनयोरैक्यं नैव संभवेत् तथाऽज्ञानेन सहात्मा स्वस्वरूपेण स्थातुं नैव शक्नुयात् ॥ २७ ॥

बहुनात्र किमुक्तेनाज्ञानं चितेर्विरोधतः ।
तस्या स्थातुं कथं योग्यं नैतद्धि विदुषां मतम् ॥ २८ ॥

टीका—अत्र बहुभाषणेन किं प्रयोजनम् । अज्ञानं ज्ञानस्य विरुद्धं सत् तेन सह स्थातुमर्हत्येतद्विदुषां मतं नैव ॥ २८ ॥

प्रतिज्ञातोऽन्धकारः स्वं प्रकाशमेव मन्यते ।
तर्हि त्यक्त्वा तमो नाम स हि सूर्यो भविष्यति ॥ २९ ॥

टीका—यद्यंधकारः प्रतिज्ञापूर्वकं स्वं प्रकाशं मन्यते तर्हि तस्य तमो नामायोग्यं स सूर्य एव ॥ २९ ॥

त्यक्त्वा काष्ठं द्वंद्वभावं वह्नौ यदा विलीयते ।
वह्निरूपं भवेदेव काष्ठत्वं नावशिष्यते ॥ ३० ॥

पदार्थसहितोन्वयः—यदा काष्ठं द्वंद्वभावं त्यक्त्वा वह्नौ विलीयते तदा तद् वह्निरूपमेव भवति काष्ठत्वं नावशिष्यते ॥ ३० ॥

निर्झरः प्राप्य गंगां वै गंगारूपो भविष्यति ।
घटाकाशो महाकाश एकरूपो भवेद्यथा ॥ ३१ ॥

प०ऽन्व०—यथा वाल्पोदकप्रवाहो गंगां प्राप्य गंगारूपो भविष्यति । घटाकाशो महाकाश एकरूपो भवेत् ॥ ३१ ॥

तथाऽज्ञानं विहाय स्वमात्मवं प्राप्यते यदि ।
तर्हि न तत्पृथक्त्वेन वाग्विषयो भविष्यति ॥ ३२ ॥

टीका—तथा स्वतो ज्ञानरूपे सत्यपि व्यर्थं योऽज्ञोऽहमित्यभिमानस्तं त्यक्त्वा श्रुत्युक्तमात्मत्वं यदि प्राप्यते तर्हि तदज्ञानं पृथक्त्वेन कथनार्हं न भविष्यति ॥ ३२ ॥

अज्ञानं हि विरोधत्वान्नात्मसंबंधमर्हति ।
सत्ताशून्यं स्वतस्तन्न स्वातंत्र्येणापि तिष्ठति ॥ ३३ ॥

प०ऽन्व०—अज्ञानं हि ( निश्चयेन ) विरोधादात्मसंबंधं नार्हति । तत् स्वतः सत्ताहीनं स्वतंत्रमपि स्थातुं नार्हति ॥ ३३ ॥

यथा लवणमत्स्यो हि प्राप्य दैवेन जीवनम् ।
जले न तद्बहिर्वापि जीवनं कर्तुमर्हति ३४ ॥

प०ऽन्व०—यथा लवणकृतो मत्स्यो दैवेन जीवनं हि प्राप्य जले वा जलस्य बहिर्वापि जीवनं कर्तुं नार्हति ॥ ३४ ॥

आत्मनो नष्टमज्ञानं तदैवात्मा प्रकाशते ।
एषोक्तिरपि व्यर्थैव सा न श्राव्या हि कर्हिचित् ॥ ३५ ॥

टीका—आत्मन्यज्ञानं नैव संभवति तर्ह्यज्ञाने नष्टे सत्यात्मा प्रकाशत एतत्कथनं कर्हिचिदपि श्रवणार्हं नैव । तदर्थहीनमेव ॥ ३५ ॥

सद्दृष्टांतं पुनरज्ञानाभावं कथयति रज्जाविति ।

॥१०१॥

रज्जौ वा तत्पृथग्वापि रज्जुसर्पो न विद्यते ।
न दृश्यो द्विप्रकारेण वाचारंभणमात्रकः ॥ ३६ ॥

टीका—रज्जुसर्पो रज्जौ न विद्यते रज्ज्वा बहिरपि न वर्तते । द्विप्रकारेणापि न दृश्यते । अतः स वाचारंभणमात्रकः ॥ ३६ ॥

यथैतदेवमज्ञानमित्याह तथेति ।

तथोभयप्रकारेणाज्ञानसिद्धिर्न विद्यते ।
अतोऽनिर्वचनीयं तत् तुच्छं चेति हि कथ्यते ॥ ३७ ॥

पदार्थसहितोन्वयः—तथोभयप्रकारेणापि ( आत्मनि वा तत्पृथग्वा ) अज्ञानस्य सिद्धिर्न भवति । अतस्तदनिर्वचनीयं तुच्छं चेति विद्वांसो वदन्ति ॥ ३७ ॥

पौर्णिमायां दिनांतेऽग्रे तमो यदि प्रधावति ।
चंद्रदर्शनमात्रेण स्वयमेव विनश्यति ॥ ३८ ॥

पदार्थसहितोन्वयः—यदि तमः पौर्णिमायां दिनांतेऽग्रे प्रधावति तर्हि तत्क्षणमेव चंद्रप्रकाशे स्वयं विनश्यति ॥ ३८ ॥

चिदानंदे तथा शुद्धे नाज्ञानं स्थातुमर्हति ।
स्वातंत्र्येण तु नाज्ञानं सिद्धं भवति यत्नतः ॥ ३९ ॥

पदार्थसहितोन्वयः--तथा शुद्धे चिदानंदेऽज्ञानं स्थातुं नार्हति । स्वतंत्रं त्वज्ञानं यत्नादपि सिद्धं न भवत्येव ॥ ३९ ॥

उक्तार्थं शंकते प्रभो इति ।

प्रभो परंपरा नष्टा ह्यज्ञानाभावतो भवेत् ।
साध्यसाधनाभावे न साक्षात्कारोऽपि जायते ॥ ४० ॥

टीका—प्रभो ( गुरो ) अज्ञानाभावे स्वीकृते सति गुरुशिष्यरूपा या परंपरा सा नष्टा भवेत् । साध्यमज्ञाननिवृत्तिः साधनं वैराग्यादि तदभावे साक्षात्कारोऽपि न जायेत ॥ ४० ॥

प्रौढवादेन स्वीकरोति सत्यमिति ।

सत्यमुक्तं त्वया विद्वन् निपुणोऽसि विचारणे ।
सयुक्तिकप्रकारेणाधुना प्रेक्षामहे वयम् ॥ ४१ ॥

पदार्थसहितोन्वयः—हे विद्वन् ( उपहासे ) त्वया सत्यमुक्तं विचारणे निपुणोऽसि । अधुना सयुक्तिकप्रकारेण प्रेक्षामहे ( विचारं कुर्मः ) ॥ ४१ ॥

प्रमाणविषयत्वाभावादज्ञानाभावं साधयति प्रत्यक्षेत्यादिना पंचपंचाशच्छ्लोकांतेन ग्रंथेन । तत्रादौ प्रत्यक्षाद्यविषयत्वं दर्श्यते प्रत्यक्षादीति ।

प्रत्यक्षादिप्रमाणैर्यत् प्रमेयत्वेन ज्ञायते ।
तत्खल्वज्ञानकार्यं हि न त्वज्ञानं स्वयं भवेत् ॥ ४२ ॥

पदार्थसहितोन्वयः—प्रत्यक्षादिप्रमाणैः प्रमेयत्वेन यज् ज्ञायते तत् खल्वज्ञानकार्यं न तु स्वयं ह्यज्ञानं भवेत् ॥ ४२ ॥

प्रमाणविषयोऽज्ञानकार्यमिति यदुक्तं तद् दृष्टांतैर्विशदयत्यंकुरेति ।

अंकुरोत्पत्तिद्वारा वै विशाला वल्लिका यथा ।
सा तु बीजस्य कार्यं हि न बीजं कोऽपि मन्यते ॥ ४३ ॥

पदार्थसहितोन्वयः—यथा वल्लिकांऽकुरोत्पत्तिद्वारा विशाला वै भवति । सा तु बीजस्य कार्यं तां बीजमिति कोपि न हि मन्यते ॥ ४३ ॥

शुभाशुभस्वरूपेण यथा स्वप्नश्च दृश्यते ।
निद्राकार्यमिति ज्ञातो नैव निद्रा स्वयं भवेत् ॥ ४४ ॥

पदार्थसहितोन्वयः—यथा स्वप्नः कदाचिच् शुभस्वरूपेण कदाचिच्चाशुभस्वरूपेण दृश्यते । स निद्राकार्यमिति ज्ञातः । स स्वयं निद्रा नैव भवेत् ॥ ४४ ॥

यथाऽऽकाशे द्विचंद्रत्वं केनचिद्धि प्रतीयते ।
तत्तु तिमिरकार्यं वै तिमिरं नैव मन्यते ॥ ४५ ॥

पदार्थसहितोन्वयः—यथा केनचिदाकाशे द्विचंद्रत्वं हि प्रतीयते तत् तु तिमिरकार्यम् । तिमिरं ( नेत्रदोषः ) वै नैव मन्यते ॥ ४५ ॥

प्रमाता च प्रमाणं च प्रमेयं प्रमितिस्तथा ।
एतदज्ञानकार्यं वै तदज्ञानं न मन्यते ॥ ४६ ॥

पदार्थसहितोऽन्वयः—तथा प्रमाता ( अंतःकरणावच्छिन्नं चैतन्यम् ) च प्रमाणं ( वृत्त्यवच्छिन्नं चैतन्यम् ) च प्रमेयं ( विषयावच्छिन्नं चैतन्यम् ) प्रमितिः ( एतत्त्रितयाद् यज् ज्ञानमुत्पन्नं तत् ) चैतत् ( सर्वं ) अज्ञानकार्यम् । तदज्ञानमिति वै न मन्यते ॥ ४६ ॥

प्रमाणादीनामज्ञानकार्यत्वं साधयति यदिति ।

यद्यद् भवति ग्राह्यं वै तत्तदज्ञानजं भवेत् ।
ग्राहकोऽपि तथैवासावज्ञानकार्यमुच्यते ॥ ४७ ॥

पदार्थसहितोऽन्वयः—यद् यद् ग्राह्यं भवति तत् तद् वा अज्ञानकार्यं भवेत् । तथैवासौ ग्राहकोऽप्यज्ञानकार्यमित्युच्यते ॥ ४७ ॥

उक्तार्थे दृष्टांतमाह स्वप्न इति ।

स्वप्ने यद् दृश्यद्रष्टृत्वं स्वप्न एवानुभूयते ।
ग्राह्यग्राहकता दृष्टाऽज्ञानकार्येऽपि सा तथा ॥ ४८ ॥

पदार्थसहितोऽन्वयः—यथा स्वप्ने प्रतीतं यद् दृश्यद्रष्टृत्वं तद्रूपेण स्वप्न एवानुभूयते तथाऽज्ञानकार्यरूपेणैव ग्राह्यग्राहकता दृष्टा ॥ ४८ ॥

गुडः स्वस्वादमश्नाति कज्जलं स्वेन लिप्यते ।
शूलोऽपि दीयते शूले तथात्रापि विचारयेत् ॥ ४९ ॥
न भिन्नं कारणात कार्यं कार्यमज्ञानरूपकम् ।
यद्येकमेवमज्ञानं ग्राह्यग्राहकता कथम् ॥ ५० ॥

टीका—–सर्वस्याप्यज्ञानकार्यत्वात् कार्यकारणयोरभेदाच्च सर्वस्याप्यज्ञानकार्यस्याज्ञानरूपत्व एकस्यैव कर्तृकरणत्वविरोधात् प्रमात्रादिव्यवहारो मृषेत्याह गुडो निजस्वादमश्नाति कज्जलं स्वेन लिप्यते शूलोपि शूले दीयते । एतत्कथनं यथाऽविचारजं तथैतत्प्रसंगेपि विचारयेत् । कार्यं कारणाद् न भिन्नं तर्हि कार्यमज्ञानरूपकम् । यद्येवं कार्यकारणरूपेणाज्ञानमेकं तर्हि ग्राह्यग्राहकता कथं सिध्येत् ॥ ४९ ॥ ५० ॥

ग्राह्यग्राहकता यस्माद्विचारे नैव युज्यते ।
अतो मृगांबुमत्स्येन प्रमाणं ह्युपमीयते ॥ ५१ ॥

पदार्थसहितोन्वयः—–यस्मात् ( यतः ) ग्राह्यग्राहकता विचारे नैव युज्यते ( अविचारकृता ) अतोऽज्ञानविषयकं प्रमाणं मृगजलमत्स्येन ह्युपमीयते । यथा स कथनमात्रस्तथाऽज्ञानाविषयकं प्रमाणमपि ॥ ५१ ॥

यत्प्रमाणाविषयं तस्य स्वरूपं कथयति प्रमाणेति ।

प्रमाणविषयं यन्न तदस्त्यंबरपुष्पवत् ।
को भेद उभयोर्मध्ये तद्विचारेण ह्युच्यताम् ॥ ५२ ॥

पदार्थसहितोन्वयः—यत् प्रमाणविषयं न तदंबरपुष्पवदास्ति । तयोरुभयोर्मध्ये को भेदो वर्तते तद् हि विचारेणोच्यताम् न कोपि भेद इत्यर्थः ॥ ५२ ॥

प्रमाणे न प्रमाणत्वं तत्रार्थेप्यर्थता कुतः ।
एतेन भाषणेनैवाज्ञानं हि भ्रममात्रकम् ॥ ५३ ॥
प्रत्यक्षादिप्रमाणानां तन्नैवं विषयो भवेत् ।
तस्मादज्ञानशब्दो वै वाचारंभणमात्रकः ॥ ५४ ॥

टीका—यत्र प्रमाणमपि स्वरूपं न लभते तत्र प्रमेयार्थेऽर्थता कुतः । एतेन भाषणेनैवाज्ञानं भ्रममात्रकम् । अज्ञानमस्तीत्यत्र किं प्रमाणम् । शब्द इति चेन्निराकृतः शास्त्रकारैरित्यादिना । स्वतोऽस्तित्वमपि तथा । प्रत्यक्षं चेत् सपद्येव निराकृतम् । प्रत्यक्षादिप्रमाणानां तदेवं विषयो न भवेत् । तस्मादज्ञानशब्दो वै शब्दमात्रः ॥ ५३ ॥ ५४ ॥

॥१०४॥

यस्मान्न कार्यमुत्पन्नं कारणं नैव तत्खलु ।
प्रमाणाविषयत्वे ह्यज्ञानं नार्हति सत्यताम् ॥ ५५ ॥

पदार्थसहितोन्वयः——यस्मात्कार्यं नोत्पन्नं तत् खलु कारणं नैव । एवं प्रमाणस्याविषयत्वेऽज्ञा सत्यतां न ह्यर्हति ॥ ५५ ॥

निद्रावरणभावेऽपि स्वयं जागर्ति यः खलु ।
स कथं स्वप्नभासेन भ्रमितो हि भविष्यति ॥ ५६ ॥

पदार्थसहितोन्वयः——यो निद्रावरणभावेऽपि स्वयं खलु जागर्ति स ( आत्मा ) स्वप्नभासेन कथं भ्रमितो हि भविष्यति ॥ ५६ ॥

पूर्वपक्षं करोत्यत्र कश्चित्कुशलधीः पुमान् ।
तात तं शृणु सौक्ष्म्येण कुशलत्वेन चानघ ॥ ५७ ॥

पदार्थसहितोन्वयः——अत्र कश्चित्कुशलधीः पुमान् ( नरः ) पूर्वपक्षं करोति तं हे अनघ हे तात सूक्ष्मरीत्या कुशलत्वेन च शृणु ॥ ५७ ॥

यदात्मनि विशुद्धत्वं निश्चलत्वं च तिष्ठतः ।
तदास्त्यज्ञानसंगोऽस्य पूर्वपक्षमतं त्विदम् ॥ ५८ ॥

टीका——यदा ( समाध्यादौ ) त्रिविधमपि जाग्रत्स्वप्नसुषुप्तिकृतं कार्यं न विद्यते तदात्मनः स्थितिर्विशुद्धा निश्चला च भवति । तदात्मन्यज्ञानसंगो वर्तत इतीदं पूर्वपक्षमतम् ॥ ५८ ॥

काष्ठे मंथनतःपूर्वं सामान्याग्निर्हि वर्तते ।
दाहकत्वं न तत्रौष्ण्यं स्वयमेव हि तिष्ठति ॥ ५९ ॥

पदार्थसहितोन्वयः——काष्ठे मंथनात्पूर्वं सामान्याग्निर्हि ( निश्चयेन ) वर्तते । तत्र दाहकत्वमुष्णत्वं च न स्तः । सामान्याग्निः स्वयमेव तिष्ठति ॥ ५९ ॥

तद्वदात्मापि स्वात्मत्वं विहाय यदि शोभते ।
तर्ह्यज्ञानस्य वार्ता हि सर्वथा नैव संभवेत् ॥ ६० ॥

टीका——आत्मन्यज्ञाननिषेधोप्युपहासकर इत्याह तद्वदित्यादिना पंचषष्ठितमश्लोकांतेन ग्रंथेन । तद्वद् यद्यात्मा स्वात्मत्वमपि विहाय शोभते तर्ह्यज्ञानस्य वार्ता हि सर्वथा नैव संभवेत् ॥ ६० ॥

दीपस्योज्ज्वलनात्पूर्वं शिखोच्छेदनमक्षमम् ।
अनुत्पन्नेऽपि वृक्षे वा तच्छाया न निषिध्यते ॥ ६१ ॥

पदार्थसहितोन्वयः—दीपस्योज्ज्वलनात्पूर्वं तस्य शिखाया उच्छेदनमक्षमम् । वृक्षेऽनुत्पन्ने सत्यपि तस्य च्छाया न निषिध्यते ॥ ६१ ॥

॥१०५॥

अनुत्पन्ने शरीरे वा नैव तच्छोधनं क्षमम् ।
असिद्धादर्शमालिन्यं को वारयेत्प्रयत्नतः ॥ ६२ ॥

पदार्थसहितोऽन्वयः—वा ( अथवा ) अनुत्पन्ने शरीरे तस्य शोधनं नैव क्षमम् । असिद्धादर्शस्य मालिन्यं कः प्रयत्नतो वारयेत् ॥ ६२ ॥

धेनुस्तनस्थदुग्धे वा यदि सारं हि विद्यते ।
तर्हि तद्ग्रहणार्थं न कथं प्रवृत्तिर्धीमताम् ॥ ६३ ॥

पदार्थसहितोऽन्वयः—यदि वा धेनुस्तनस्थदुग्धे सारं ( नवनीतं ) हि विद्यते तर्हि तस्य ग्रहणार्थं धीमतां प्रवृत्तिः कथं न स्यात् ॥ ६३ ॥

तथा निजस्वरूपे वै नात्मत्वमपि विद्यते ।
अज्ञानं यदि तत्र स्यादहो ते बोधवैभवम् ॥ ६४ ॥

पदार्थसहितोऽन्वयः—तथा निजस्वरूप आत्मत्वमपि न वै विद्यते । यदि तत्राज्ञानं स्यादिति ते मतं तर्हि अहो इत्याश्चर्ये ते बोधवैभवम् ( तव बुद्धिकौशल्यमतीव चित्रं वर्तते ) ॥ ६४ ॥

तस्मादज्ञाननास्तित्वं स्वभावेनैव सिध्यति ।
अत एतत्प्रसंगे तु निषेधोऽपि निषिध्यते ॥ ६५ ॥

पदार्थसहितोऽन्वयः—तस्मादज्ञानस्य नास्तित्वं स्वभावेनैव सिध्यति । अत एतत्प्रसंगे तु निषेधोऽप्यप्रयुक्तो भवति ॥ ६५ ॥

आत्मनि अज्ञानाभावं साधयति बहुभिः श्लोकैः।

एवं यदि विशुद्धो वै भावाभावविवर्जितः।
देवो विराजते तर्हि न तत्राज्ञानसंभवः ॥ ६६ ॥

पदार्थसहितोन्वयः—यद्येवमात्मदेवो विशुद्धो भावाभावविवर्जितो वै विराजते तर्हि तत्र (आत्मनि) अज्ञानसंभवो नैव ॥ ६६ ॥

तत्राज्ञानस्य भावस्तु वाचारंभणमात्रकः।
तन्निवृत्तिस्तथैवास्ति खपुष्पहरणं यथा ॥ ६७ ॥

पदार्थसहितोन्वयः—तत्राज्ञानस्य भावस्तु वाचारंभणमात्रकः। तस्य निवृत्तिस्तथैव (वाचारंभणमात्रैव) अस्ति। यथा गगनपुष्पस्य हरणं वाचारंभणमात्रकं तद्वत् ॥ ६७ ॥

घटाभावस्य चूर्णं हि क्रियते शतशो यथा।
मृत्योर्मृत्युश्च प्राप्येत तथैवाज्ञाननाशनम् ॥ ६८ ॥

पदार्थसहितोन्वयः—यथा घटाभावस्य चूर्णं शतशो हि क्रियते यथा च मृत्योर्मृत्युः प्राप्येत (एतद् यथा वाग्विडंबनं) तथैवाज्ञानस्य नाशनम् ॥ ६८ ॥



मृतस्य विषपाने वै मूकस्य मुखबंधने।
मार्जनेऽलिखितस्यापि नैरर्थक्यं स्वभावतः ॥ ६९ ॥

पदार्थसहितोन्वयः—मृतस्य विषपाने वै मूकस्य वा मुखबंधनेऽलिखितस्य मार्जनेऽपि निरर्थकत्वं स्वाभाविकम् ॥ ६९ ॥

यत्र न स्फुरत्यात्मत्वं तत्रान्यन्नैव सिध्यति ।
तत्र कल्पितमज्ञानमेतन्न विदुषां मतम् ॥ ७० ॥

पदार्थसहितोन्वयः—यत्रात्मत्वं स्फुराति तत्रान्यद् नैव सिध्यति । तत्राज्ञानं कल्पितमेतद् विदुषां मतं न ॥ ७० ॥

वंध्याया वै सुतोत्पत्तिर्भर्जितबीजरोहणम् ।
तमःपालनमादित्ये भाषणं तन्निरर्थकम् ॥ ७१ ॥

पदार्थसहितोन्वयः—वंध्यायाः पुत्रजन्म वै भर्जितबीजादंकुरोत्पत्तिः सूर्ये चांधकारस्य पालनमेतद् भाषणमर्थहीनमेव ॥ ७१ ॥

श्रुतमिदं भवदुक्तं तथापि बुद्धिं नारोहतीति चेदुपायमाह शुद्धेति ।

शुद्धचिन्मात्ररूपस्य सयुक्तिके विचारणे ।
अज्ञानं न प्रतीयेत ज्ञप्तिरात्मा हि केवलः ॥ ७२ ॥

टीका—शुद्धचिन्मात्ररूपस्यान्वयव्यतिरेकेण विचारे क्रियमाणे तत्राज्ञानस्यात्यंताभावः प्रतीयेत । आत्मा केवलो ज्ञप्तिमात्र एतद् रहस्यं बुद्धिमारोहेदित्यर्थः ॥ ७२ ॥

तत्राज्ञानं तु नास्त्येव मृषा तत्कथनं भवेत् ।
निषेधस्तस्य तस्माद्वै तत्तुल्यश्च भविष्यति ॥ ७३ ॥

पदार्थसहितोन्वयः——एवमात्मस्वरूपे त्वज्ञानं नास्त्येव । तर्हि तत्कथनं मृषैव भवेत् । तस्मात् तस्य निषेधो वै तत्तुल्यश्च भविष्यति । अज्ञानं निषेधमपि नार्हति ॥ ७३ ॥

अत्रार्थे अनेकदृष्टांतानाह दर्श इति ।

दर्शे क्वचिद्यथा चंद्रः पूर्णत्वेन प्रकाशते ।
पीनत्वेन शशशृंगस्तंभोऽपि वर्तते यथा ॥ ७४ ॥

पदार्थसहितोन्वयः—क्वचिदमावास्यायां यथा चंद्रः पूर्णत्वेन प्रकाशते यथा वा शशशृंगस्तंभोऽपि पुष्टत्वेन वर्तते ॥ ७४ ॥

अवग्राह्य खपुष्पाणि तेषां माला कृता खलु ।
वंध्यासुतमलंकृत्य तं शोभयेत सा यथा ॥ ७५ ॥

पदार्थसहितोन्वयः——आकाशपुष्पाण्यवग्राह्य ( गृहीत्वा ) तेषां माला खलु कृता । यथा सा वंध्यापुत्रमलंकृत्य तं शोभयेत ॥ ७५ ॥



कूर्मीघृतं बहुलं वै नभःपात्रेण मापितम् ।
अजातनंदिन्युद्वाहेऽत्यंतं हि सुप्रवर्तितम् ॥ ७६ ॥

पदार्थसहितोऽन्वयः—बहुलं कूर्मीघृतमाकाशपात्रेण वै मापितम् । अजातकन्याया विवाहे च तदत्यंतं हि सुष्टुप्रकारेण प्रवर्तितम् ॥ ७६ ॥

अज्ञानास्तित्वनास्तित्वे विचारं नार्हतस्तथा ।
नास्तीति निश्चितार्थे हि वाग्जल्पनापि सा मृषा ॥ ७७ ॥

टीका—यथा पूर्वोक्तदृष्टांतेषु यत् कथितं तद् निषेधमपि नार्हति तथाऽज्ञानं तस्य निषेधो वा विचारं नार्हत्येव । योऽर्थो निश्चितस्तत्र पुनर्निषेधार्थं वाग्व्यापारोऽपि मृषैव ॥ ७७ ॥

निद्रावृतस्य भाषायां प्रवृत्तिर्नैव युज्यते ।
तथापि त्वेकदैवाशु पुनर्विचारयामि तत् ॥ ७८ ॥

पदार्थसहितोऽन्वयः—निद्रावृतो यद् वदाति तदर्थशून्यमेव वर्तते । तथापि पुनस्तु ( च ) आशु ( झटिति ) एकदैव तद् ( अज्ञानविषयकं ) विचारयामि ॥ ७८ ॥

अज्ञानस्वरूपनिर्धारणपूर्वकमनुमित्यापि तत्सिद्धिं वारयाति बहुभिः श्लोकैः ।

स्वान्यप्रकाशकत्वेन द्रष्टृत्वं नात्मनि क्वचित् ।
सर्वसंबंधशून्यश्च स्वयमेवावतिष्ठते ॥ ७९ ॥

टीका—स्वस्मादन्यद् यः प्रकाशयति स द्रष्टा । प्रकाश्याभावादात्मनि द्रष्टृत्वं क्वचिद् न । सर्वसंबंधशून्यश्चात्मा स्वयमेव स्वमहिम्नि विराजते ॥ ७९ ॥

तथापि दृश्यसंबंधाद् द्रष्टृत्वं यत्प्रतीयते ।
एतदेव हि चाज्ञानं नैतत्तु विदुषां मतम् ॥ ८० ॥

पदार्थसहितोन्वयः—तथापि दृश्यसंबंधाद् यद्द्रष्टृत्वं प्रतीयत एतदेव ह्यज्ञानमिति यदि मन्येत तर्ह्येतत् तु विदुषां मतं न ॥ ८० ॥

पुनरपि शंकां स्पष्टीकरोत्यात्मेति ।

आत्मत्वस्यापि स्पर्शो न तत्र दृश्यं विचित्रितम् ।
पश्यत्येव हि तत्सर्वमात्मा प्रत्यक्षमेव वै ॥ ८१ ॥

पदार्थसहितोन्वयः—यत्र स्वरूप आत्मत्वकल्पनापि न वर्तते तत्रैतच्चित्रविचित्रं सर्वं दृश्यमात्मा प्रत्यक्षमेव वै पश्यति ॥ ८१ ॥

यद्यज्ञानं न दृष्टं तु दृश्यादज्ञानमुच्यते ।
एवमज्ञानसिद्धिश्च दृश्यादेवानुमीयते ॥ ८२ ॥

टीका—यद्यज्ञानं प्रत्यक्षं तु न दृष्टं तर्ह्यपि दृश्यकारणत्वेनाज्ञानमस्त्येव । एवमज्ञानसिद्धिश्च दृश्यादेवानुमीयते । प्रयोगश्चेत्थं । अज्ञानं सत् तत्कार्यसत्त्वात् स्फोटानुमिताग्निशक्तिवत् ॥ ८२ ॥

अत्र बहवो दृष्टांताः संति तत्र केचित् प्रदर्श्यन्ते ख इत्यादिना ।

खे वै चंद्रद्वयं दृष्ट्वा नेत्रदोषोऽनुमीयते ।
तथैव दृश्यभासेनाज्ञानमेव प्रतीयते ॥ ८३ ॥

पदार्थसहितोऽन्वयः—आकाशे द्विचंद्रदर्शनाद् नेत्रदोषो वा अनुमीयते । तथैव दृश्यभासस्य कारणमज्ञानमेव ॥ ८३ ॥

भूतले वृक्षवल्ल्यादि प्रफुल्लं वै प्रतीयते ।
एतस्य जलपानं तु न केनापि हि दृश्यते ॥ ८४ ॥
तद्ग्रहणं तथाप्यत्र मूलेनैवानुमीयते ।
तथैव दृश्यप्रत्यक्षेऽज्ञानभावः प्रकल्प्यते ॥ ८५ ॥

पदार्थसहितोऽन्वयः—पृथिव्यां तरुलतादिकं फलपुष्पादिना प्रफुल्लं वै प्रतीयते । जलपानं विनै-तद् न संभवति । तत् तु केनापि हि न दृश्यते प्रत्यक्षम् । तथापि जलग्रहणं मूलेनैवानुमीयते । तथैव दृश्यप्रत्यक्षेऽज्ञानभावस्तत्कारणत्वेन प्रकल्प्यते ॥ ८४ ॥ ८५ ॥

निद्राया अत्यये निद्रा प्रत्यक्षा न प्रतीयते ।
स्वप्ने तु भासमाने वै यथा निद्रानुमीयते ॥ ८६ ॥
तथा शुद्धचिदाकाशेऽज्ञानभासो न संभवेत् ।
तथापि दृश्यभासेनाज्ञानमूलं प्रतीयते ॥ ८७ ॥

पदार्थसहितोन्वयः—निद्रायां निवृत्तायां तस्याः प्रतीतिः प्रत्यक्षा न भवति तद्यपि यथा भासमाने तु स्वप्ने निद्रा वा अनुमीयते । तथा यद्यपि शुद्धचित्स्वरूपे ज्ञानभासो न संभवेत् तथापि दृश्यभासेनाज्ञानमूलं प्रतीयते ॥ ८६ ॥ ८७ ॥

यथा दृश्यानुमानेनाज्ञानसिद्धिः कृता त्वया ।
अधुना तदभावं वै सावधानेन भो शृणु ॥ ८८ ॥
स्वप्रकाशे स्वतःसिद्धेऽज्ञानशब्दो न सह्यते ।
यथा प्रभाघने सूर्ये तम उक्तिर्वृथा भवेत् ॥ ८९ ॥

पदार्थसहितोन्वयः—यथा दृश्यानुमानेन त्वयाज्ञानसिद्धिः कृता भो वादिन्नधुना तस्याभावं सावधानेन वै शृणु । स्वप्रकाशे स्वतःसिद्धेऽज्ञानशब्दोऽपि न सह्यते । कथम् । यथा प्रभाघने सूर्येऽन्धकारकथनं वृथैव भवेत् ॥ ८८ ॥ ८९ ॥

प्रतिज्ञातार्थदृढीकरणाय शंकते निर्विकार इति ।

निर्विकारे निजानंदे वृथैवाज्ञानभाषणम् ।
अज्ञानेन विना सिद्धिः कथं दृश्यस्य वै भवेत् ॥ ९० ॥

पदार्थसहितोन्वयः—निर्विकारे निजानंदस्वरूपेऽज्ञानकथनं वृथैव चेत् तर्ह्यज्ञानेन विना दृश्यस्य सिद्धिः कथं वै भवेत् ॥ ९० ॥

दृश्यद्रष्टृत्वभावो हि स्वरूपे न प्रतीयते ।
शून्यनगरवत्तस्य भावो मृषैव केवलम् ॥ ९१ ॥

पदार्थसहितोन्वयः—स्वरूपे दृश्यद्रष्टृत्वभावो न हि प्रतीयते । तस्य ( दृश्यद्रष्टृत्वस्य ) भावः शून्यनगरवन्मृषैव केवलम् ॥ ९१ ॥

तत्स्वरूपेण नास्त्येव यदस्ति शब्दगोचरम् ।
यद्रूपं तु वा येन शून्यं खलु प्रकाशितम् ॥ ९२ ॥

टीका—यच् शब्दगोचरमस्ति तत्स्वरूपेण नास्त्येव । दृश्यद्रष्टृत्वं तु शब्दगोचरमतस्तस्यात्यंताभावोऽस्ति । तर्ह्यत्यंताभाववद् यद् दृश्यं तस्य सिद्ध्यर्थमज्ञानस्यांगीकरणमनुचितमेव । ननु शब्दगोचरत्वे यस्य रूपमपि नास्ति कश्चिदपि निर्देशो यत्र न संभवेत् तदात्मवस्तु शून्यमेवेत्याशंकायामाह । यच् शब्दगोचरमरूपं तदेवास्ति । कथम् । येन शून्यं प्रकाशितं तच् शून्यं नैव ॥ ९२ ॥

तत्कथं हि भवेच्छून्यमात्मरूपं प्रभाघनम् ।
अस्तिनास्ति विहायैव स्वरूपेण प्रकाशते ॥ ९३ ॥

पदार्थसहितोन्वयः—अखंडज्ञानप्रभावत् तदात्मरूपं कथं शून्यं हि भवेत् । तदस्तिनास्तिकल्पनत्यक्त्वैव स्वरूपेण प्रकाशते ॥ ९३ ॥

निरपेक्षा स्थितिर्यस्य स न प्रेक्ष्योऽपि पश्यति ।
एतादृशं यदस्तित्वं तस्याभावः कथं भवेत् ॥ ९४ ॥

पदार्थसहितोन्वयः—यस्य स्थितिर्निरपेक्षा ( अन्यापेक्षारहिता ) स यद्यप्यन्यस्य प्रेक्ष्यो न तथापि पश्यति ( प्रतीतिमात्रं दृश्यं प्रकाशयति नाम तदधिष्ठानत्वेन तिष्ठति ) एतादृशं यत् तस्यास्तित्वस्याभावः कथं भवेत् ॥ ९४ ॥

मृषारोपे हि प्राप्तेऽपि स्वयमस्ति स्वभावतः ।
विशेषजल्पमस्पृष्ट्वा स्वानंदेन विराजते ॥ ९५ ॥

टीका—दृश्यारोपो मृषैव यद्यपि प्राप्तस्तर्ह्यपि निजस्वरूपे किंचिदपि न्यूनाधिक्यं नैव संभवति। अतो विशेषजल्पं घटपटादिरूपं शब्दजातमस्पृष्ट्वात्मारामः स्वानंदेन शोभते ॥ ९५ ॥

विलीनायामपि वृत्तौ तदभावं प्रकाशयेत् ।
तथापि घटवन्नैव दृश्यत्वेन प्रतीयते ॥ ९६ ॥

टीका--यदा वृत्तिर्विलीना भवति तदा तस्या अभावं प्रकाशयति । तथाप्यात्मनः प्रतीतिर्घटवद् दृश्यत्वेन नैव भवेत् । एतत्त्वनुभवेनैव सिद्धं न तु विध्यनुज्ञया ॥ ९६ ॥

वक्ति किं किं हि नो वेदः प्रत्यक्तत्त्वे तु मौनभाक् ।
जातिगुणक्रियाशून्ये वाग्व्यापारो न युज्यते ॥ ९७ ॥

टीका—वेदः किं किं हि नो वक्ति (सर्वमेव वक्ति) परंतु प्रत्यक्तत्त्वे आत्मस्वरूपे मौनभाक् (मौनं स्वीकरोति)। यत्र जातिगुणक्रियासंबंधो न वर्तते तस्मिन् स्वरूपे वाक् कुंठिता भवति। यतो वाचो निवर्तन्ते इति श्रुतेः एष आत्मनः सहजो महिमा न तु कृतक इत्यर्थः॥ ९७ ॥

भानुप्रकाशितं सर्वं नात्मा तेन प्रकाश्यते।
नभसा व्यापितं सर्वं नैवात्मा तेन व्यापितः॥ ९८ ॥

पदार्थसहितोन्वयः—येन भानुना सर्वं प्रकाशितं तेनात्मा न प्रकाश्यते। यद्यप्याकाशेन सर्वं व्याप्तं तथापि तदात्मानं नैव व्याप्नोति॥ ९८ ॥

अस्थिमांसादिपुंजो यो देहोऽहमिति मन्यते।
अहंकारः परिच्छिन्नो नात्मानं ज्ञातुमर्हति॥ ९९ ॥

पदार्थसहितोन्वयः—अस्थिमांसादिमयो यो देहः स एवाहमिति योहंकारी मन्यत एतादृशः परिच्छिन्नोऽहंकारः पूर्णमात्मानं ज्ञातुं नैवार्हति॥ ९९ ॥

बुद्धिः सर्वं विजानाति प्रत्यग्वस्तुनि लीयते।
मनोऽपि कल्पते सर्वं नष्टं भवति साक्षिणि॥ १०० ॥

टीका—यद्यपि बुद्धिः सर्वं विजानाति तथापि प्रत्यक्स्वरूपे लीयत एव। मनोऽपि सर्वं

कल्पते परं साक्षिस्वरूपे स्वयमेव नष्टं भवति। एष आत्मतो महिमा स कस्यापि विषयो न भवेत्। द्वितीयत्वं न सहते ॥ १०० ॥

शुष्कास्थिविषयेषु श्वेवेंद्रियाणि रतानि वै।
तेषां तु प्राङ्मुखानां न प्रत्यक्सुखोपलंभनम् ॥ १०१ ॥

टीका—शुष्कास्थिनि यथा श्वा रतस्तथा नीरसविषयेषु यानींद्रियाणि रतानि तेषां बहिर्मुखानां प्रत्यगांतरं यत् सुखं तस्योपलब्धिर्नेति किं वक्तव्यम् ॥ १०१ ॥

बुद्ध्यादिसर्वाविषयत्वे हेतुमाह यस्मिन्निति।

यस्मिञ् शुद्धे स्वरूपेऽस्तिनास्त्युल्लेखो न संभवेत्।
तत्र सोपाधिकं ज्ञानं कथं कार्यक्षमं भवेत् ॥ १०२ ॥

टीका—यस्मिञ् शुद्धे स्वरूपेऽस्तिनास्तीत्युल्लेखोऽपि न संभवेत् तत्र सोपाधिकं बुद्ध्यादिजन्यं ज्ञानं कार्यक्षममात्मानं विषयीकर्तुं समर्थं कथं भवेदिति किं वाच्यम्। अत्र संमतिश्लोकौ विवेकचूडामणौ। भानुनेव जगत्सर्वं भासते यस्य तेजसा। अनात्मकमसत्तुच्छं किं नु तस्यावभासकम् ॥ १ ॥ वेदशास्त्रपुराणानि भूतानि सकलान्यपि। येनार्थवन्ति तं किं नु विज्ञातारं प्रकाशयेत् ॥ २ ॥ टीका—यस्य (आत्मनः) तेजसा सर्वं जगत् सूर्येणेव भासते तस्यावभासकं (यद् बुद्धींद्रियादिकमनात्मकमसत् तुच्छं तत्) भवेत किम्। येनात्मना वेदशास्त्रपुराणानि सकलान्यपि भूतान्य-

र्थवन्ति ( सार्थानि ) भवन्ति तं ज्ञानघनं किं नु प्रकाशयेत् । तं प्रकाशयितुं किमपि समर्थं न भवे-देव ॥ १०२ ॥

यन्नास्ति हि स्वसंवेद्यं परसंवेद्यं तत्कुतः ।
स्वान्यज्ज्ञातं न भूत्वा च रसनावद्विराजते ॥ १०३ ॥

टीका—यत्स्वेनापि वेद्यं नास्ति तत्परेण वेद्यं कथं भवेत् । स्वस्य वान्यस्य वा विषयं न भूत्वा रसनावद् विराजते । रसना यथान्यस्य सर्वस्यापि विषयस्य रसं गृह्णाति परं रसनाया यो रसः स तया वा केनापि रसेन वा न गृह्यते ॥ १०३ ॥

यस्य कारणं न तत्स्वयमपि नेत्याह नामेति ।

नामरूपात्मको भासो यो यः स्वाग्रे प्रतीयते ।
जननी तस्य तुच्छास्ति तस्याभावे तु का कथा ॥ १०४ ॥

टीका—स्वाग्रे ( आत्मनोग्रे ) यो यो नामरूपात्मको भासः प्रतीयते तस्य जननी ( माया ) तुच्छास्त्यत्यंताभावत्वात् । तर्हि तस्य दृश्यस्याभावः कैमुतिकन्यायेन प्राप्त एव नाम तस्यात्यंताभावः कथनमपि नार्हति ॥ १०४ ॥

स्वानुभवेऽपि यस्यौत्सुक्यं न किमपि वर्तते ।
चिकीर्षा तु कथं तस्य चान्यावलोकने भवेत् ॥ १०५ ॥

पदार्थसहितोऽन्वयः—यस्य ( आत्मदेवस्य ) स्वस्यानुभवेऽप्यौत्सुक्यं ( उत्कटेच्छा ) नास्ति तस्यान्यावलोकने चिकीर्षा ( इच्छा ) तु कथं भवेत् । नैव भवेत् ॥ १०९ ॥

द्यूतकेलिरता ये ते मध्यं न साधयन्ति वै ।
तथानुभवमात्रं यत् स्वरूपं न च साध्यते ॥ १०६ ॥

टीका—वादीद्यूतं नाम पूर्वकाले प्रसिद्धम् । तत्र खेलकेन सच्छिद्रं चर्म भ्रमयितव्यं प्रतिद्वंद्विना छिद्रे शलाका प्रक्षेप्तव्या । प्रक्षिप्ता चेत् स जितवानित्युच्यते । तत्र भ्राम्यमाणे चर्मणीदं छिद्रम् । प्रक्षेप्तव्या शलाकेति बुद्ध्या यावत्प्रक्षिपति तावत् सा बहिरेव पतति । एवं साधनमप्यात्मानं साधयितुं प्रवृत्तं बहिरेव तिष्ठति न त्वंतरात्मानं साधयति । द्यूतकेलौ ये रतास्ते मध्यं न वै साधयन्ति । तथानुभवमात्रं यत् स्वरूपं तदनुभवेन न च साध्यते द्वैताभावात् ॥ १०६ ॥

स्वच्छायामस्तके दत्वा पादमुल्लंघयाम्यहम् ।
एवं निश्चयवान् यः स धीमान् खलु प्रतीयते ॥१०७॥

पदार्थसहितोऽन्वयः—स्वस्य च्छायाया मस्तके पादं दत्वा तदहमुल्लंघयाम्येवं यो निश्चयवान् स खलु धीमान् । काका मूर्ख इत्यर्थः ॥ १०७ ॥

दार्ष्टांतिकं कथयति ।

तथा विद्वद्वरिष्ठो यो निजानुभववान् भवेत् ।
एवं निश्चयवान् यः स नैव ज्ञानीति मन्यते ॥१०८॥

पदार्थसहितोन्वयः—तथा यो विद्वद्वरिष्ठः ( काका मूर्खशिरोमणिरित्यर्थः ) निजानुभववान् भवेत् ( स्वरूपमनुभवामीत्यभिमानवान् भवेत् ) स एवं निश्चयवान् ज्ञानीति विद्वद्भिर्नैव मन्यते ॥ १०८ ॥

यत्र न नामजात्यादि शब्दस्तत्र करोति किम् ।
ब्रह्म कूटस्थः साक्षी यो घटवन्न स बुध्यते ॥१०९॥

पदार्थसहितोन्वयः—यत्र ( स्वस्वरूपे ) नामजात्यादि नास्ति तत्र शब्दः किं करोति । यः शब्दस्यापि साक्षी कूटस्थः स ब्रह्मैव । घटवत् स न बुध्यते ॥ १०९ ॥

यस्यैव स्वप्रकाशेन चांधत्वमपि भासते ।
स तु नांधो भवेदेव व्यवहारप्रकाशनात् ॥ ११० ॥

पदार्थसहितोन्वयः—यस्य स्वप्रकाशेनैवांधत्वमपि भासते प्रतीयते स त्वंधो न भवेदेव । कथं । यतः स व्यवहारं प्रकाशयति ॥ ११० ॥

दृश्यत्वेन स्वमप्यात्मा नैव प्रेक्षितुमर्हति ।
स्वद्रष्टृत्वस्य स्वीकारे तस्योत्साहो न कश्चन ॥१११॥

पदार्थसहितोन्वयः—आत्मा स्वमपि रूपं दृश्यत्वेन प्रेक्षितुं नार्हत्येव । स्वद्रष्टृत्वस्य स्वीकारे तस्योत्साहः कश्चन न वर्तते ॥ १११ ॥

स्वपृथग्वस्त्वभावे तु कं को विलोकयेत्खलु ।
ऐक्यं यद् द्वैतसापेक्षं स्वस्मिन्नेव विलीयते ॥ ११२ ॥

टीका—यतः स्वस्मात् पृथग् वस्तु नैवास्ति ततः कः कं विलोकयेत् खलु । द्वैताभावे को द्रष्टा किं दृश्यम् । अतो द्वैतसापेक्षं यदैक्यं तत् स्वरूपे विलीयत एव ॥ ११२ ॥

द्वैताद्वैतादिसंकोचं दूरं विहाय सर्वशः ।
स्वप्रकाशस्वभावेन यत्र कुत्र प्रतीयते ॥ ११३ ॥

टीका—द्वैताद्वैताद्याकुंचनं सर्वतो दूरं परित्यज्यात्मारामः सर्वत्र स्वप्रकाशस्वभावेन प्रतीयते । कामपि कल्पनां स्वस्मिन् न गृह्णाति । स्वप्रकाशस्वभावः शोभते ॥ ११३ ॥

द्रष्टा हि दृश्यरूपेण नानात्वेन प्रतीयते ।
विविधत्वे प्रतीतेऽपि चिन्मात्रं तु न भिद्यते ॥ ११४ ॥

पदार्थसहितोन्वयः—नानादृश्यरूपेण द्रष्टा हि ( निश्चयेन ) प्रतीयते । अतः प्रतीतेऽपि विविधत्वे चिन्मात्ररूपं नैव भिद्यते ( न भेदं प्राप्नोति ) जलतरंगन्यायेन ॥ ११४ ॥

अत्र दृष्टांतमाह ।

शर्करानेकरूपैर्वै यथैकैव प्रतीयते ।
नानात्वेन तथा द्रष्टा ह्येक एव स्वयंप्रभः ॥ ११५ ॥

पदार्थसहितोन्वयः——यथैकैव शर्करानेकरूपैः ( खाद्यानेकरूपैः ) वै प्रतीयते तथैक एव द्रष्टा नानात्वेन प्रतीयमानोऽपि हि ( निश्चयेन ) स्वयंप्रभः ( स्वप्रकाशस्वभावः ) एव प्रकाशते ॥ ११५ ॥

स्वप्रकाशस्वरूपोऽपि स्वयं वेद्यो भवेन्न हि ।
स्वं नावलोकयेत् स्वस्मिन् स रत्नदर्पणो यथा ॥ ११६ ॥

पदार्थसहितोन्वयः——आत्मा यद्यपि स्वयंप्रभस्तथापि स्वयं स्वस्य वेद्यो नैव भवति । कथं । यथा रत्नदर्पणः स्वस्मिन् स्वमेव नावलोकयति तथा ॥ ११६ ॥

दृश्यभ्रमे प्रतीतेऽपि नूतनत्वात्प्रतिक्षणम् ।
न वस्तुनि भवेद्भेदः शिखाभिः पावके यथा ॥ ११७ ॥

पदार्थसहितोन्वयः——यथा शिखाभिः पावके भेदो न भवति तथा प्रतिक्षणं नूतनत्वाद् दृश्यभ्रमे प्रतीतेऽपि वस्तुनि भेदो न भवेदेव ॥ ११७ ॥

यद् दृश्यमधुनोत्पन्नं तद्विहाय पुरः पुनः ।
निर्विकारस्वभावेन नूतनमेव पश्यति ॥ ११८ ॥

टीका——यद् दृश्यमस्मिन् क्षण उत्पन्नं तत् स्वस्मिन् विलीनं कृत्वा स्वयं विकाररहितः सन् पुनः स्वाग्रे नूतनमेव दृश्यं पश्यति । प्रतिक्षणं नूतनमेव दृश्यं स्वस्मिन विलासयन्नपि स्वयं निर्विकारस्तिष्ठत्येव ॥ ११८ ॥

मृत्तिकाया गणाधीशो मृद्भूषणैश्च शोभते।
द्रष्टा हि दृश्यरूपेण तद्वदेव प्रतीयते ॥ ११९ ॥

टीका—मृत्तिकाया गणाधीशो मृत्तिकाभूषणैः शोभते। तथैव द्रष्टैव दृश्यरूपेण विराजते। यथा दृष्टांते गणाधीशो भूषणानि च मृत्तिकारूपाण्येव तथा दृङ्मात्रे वस्तुनि द्रष्टृत्वं दृश्यत्वं च प्रातीतिकमेव दृङ्मात्रमेव वास्तवम् ॥ ११९ ॥

नेतीति वाक्यं सर्वनिषेधकमप्येनमात्मानं न निषेधयतीत्याह नेतीति।

नेतिनेतिमुखेनापि निषेधे न निषिध्यते।
विधेर्न विषयो भूत्वा विश्वं व्याप्य च तिष्ठति ॥ १२० ॥

टीका—नेतिमुखेन श्रुतिराखिलं दृश्यभावं निषेधयति तर्ह्यप्यस्य निषेधं न करोति परं मौनं व्रजति। सर्वनिषेधावधिरूपेणात्मा विराजत एव। विधिमुखेनापि गोचरो न भवति विधिनिषेधयोः प्रकाशकत्वात् स्वयंप्रकाशकत्वाच्च। अखिलविश्वरूपेणैष एव शोभते। द्वैताभावेऽस्य निषेधको वा प्रकाशको वा नैव वर्तते ॥ १२० ॥

सर्वज्ञे सर्वगे ह्यस्मिन् शुद्धे चिन्मात्ररूपके।
दृश्यं न विद्यते किंचित् स्वयमेवावशिष्यते ॥ १२१ ॥

पदार्थसहितोन्वयः—सर्वरूपेण स्थिते ज्ञानरूपे सर्वानुगतेऽस्मिञ्चिन्मात्ररूपके किंचिदपि दृश्यं न विद्यते । स्वयं दृङ्मात्रमेवावशिष्यते ॥ १२१ ॥

इदं ज्ञानमिदमज्ञानमिदं सत्यमिदं मिथ्येत्यादिः सर्वः स्वरूपविलास इत्याह स्वयमिति ।

स्वयं हि विलसेदेव ज्ञानाज्ञानविलासतः ।
स्वयं दृश्यनिमित्तेनात्मानं प्राप्नोति सर्वथा ॥ १२२ ॥

टीका—इदं दृश्यं गृह्णामीति प्रवृत्तोऽप्यात्मानमेव लभते दृश्यस्यान्यत्वाभावात् ॥ १२२ ॥

उत्कृष्टदृश्यसौंदर्यं दृष्ट्वा हि मोदते स्वयम् ।
दृग्दृश्यव्यवहारेऽपि भेदो द्रष्टरि नास्ति वै ॥ १२३ ॥

टीका—स्वरूपत्वेऽप्यन्यदिवोत्कृष्टं दृश्यसौंदर्यं पश्यन् स्वयं हि मोदते ( निश्चयेन आनंदितो भवति । एवं द्रष्टा दृश्यमिति प्रतीतेपि व्यवहारेपि द्रष्टरि भेदो नास्त्येव । दृग्दृश्यव्यवहारोपि दृङ्मात्र-स्वरूपात् पृथग् नास्त्येव ॥ १२३ ॥

सूत्रमणिगणाकृत्या सुवर्णं शोभते यथा ।
त्रिपुट्यात्मकरूपेण दृङ्मात्रं हि विराजते ॥ १२४ ॥

टीका—सुवर्णसूत्रेण गुंफिता सुवर्णमणीनां माला या सा यथा सुवर्णरूपैव तथा व्यवहारे

प्रतीयमाना द्रष्टा दृश्यं दर्शनमिति या त्रिपुटी तद्रूपेण दृङ्मात्रमेव शोभते । सूत्रं मणयस्तेषां च सूत्रेण गुंफितत्वमेतद्रूपा या त्रिपुटी मालायां प्रतीयते तद्रूपेण यथा सुवर्णमेव शोभते ॥ १२४ ॥

रश्मिजालसहस्रेण भास्करो यदि भासते ।
तथापि तत्स्वरूपे तु भेदो नैव प्रतीयते ॥ १२५ ॥
उच्चारितेषु शब्देषु वाचैका विद्यते खलु ।
शर्कराकोटिखंडेषु माधुर्यं नैव भिद्यते ॥ १२६ ॥

टीका—यद्यपि सूर्यनारायणः सहस्रकिरणैर्युक्तः प्रतीयते तथापि सूर्यस्वरूपे तेन भेदो नैव भवेत् । उच्चारितेषु शब्देष्वेकैव वाचा विद्यते । वाचायास्तैः शब्दैर्भेदो न भवति । यथा च कोटयवधिशर्कराखंडेष्वेकमेव माधुर्यमभेदेन वर्तते ॥ १२५ ॥ १२६ ॥

दृश्यसमूहरूपेण यदि द्रष्टा प्रतीयते ।
दृङ्मात्रे तत्स्वरूपे तु भेदस्पर्शो न जायते ॥ १२७ ॥

टीका—तथा यतो दृश्यसमुदायरूपेण द्रष्टैव प्रतीयते ततो द्रष्टुर्दृङ्मात्रं यत् स्वरूपं तत्र भेदो वाचारंभणमेव ॥ १२७ ॥

यद्यपि दृश्यमुत्सृज्य स्वरूपमभिवांछति ।
तर्हि स स्वस्वरूपेण ह्यस्त्येव तु स्वभावतः ॥ १२८ ॥

टीका—यद्यप्यात्मा दृश्यविलासं त्यक्त्वा स्वरूपमभिवांछति तर्हि स निजरूपेण स्वभावतः ( प्रयत्नं विना ) अस्त्येव। दृश्यविलासकाले तदभावकाले वात्मनो दृङ्मात्रस्वरूपमेवाभेदेन वर्तते ॥१२८॥

समाधिस्वरूपमाह स्वतंत्रेति ।

स्वतंत्रदृश्यनास्तित्वे द्रष्टृत्वं न च संभवेत् ।
दृश्यद्रष्टृविलासोऽयं परो नास्ति समाधितः ॥ १२९ ॥

टीका—यतो दृश्यं स्वातंत्र्येण नास्ति ततो द्रष्टृत्वमपि वास्तवं नैव । अतोऽयं दृश्यद्रष्टृविलासः समाधितः ( दृङ्मात्रस्वरूपतः ) अन्यो नास्ति । विलासस्य प्रतीतिमात्रत्वाद् गगननीलिमवत् ॥१२९॥

बहुनात्र किमुक्तेन विकारोऽत्र न विद्यते ।
येन केन प्रकारेण राजते स्वयमेव हि ॥ १३० ॥

टीका—बहुभाषणेन किं प्रयोजनम् । विलासयोगात् स्वरूपे विकारो नैव संभवति । यतो विलासकाले वा तदभावकाले वा स्वयमेव निश्चयेन शोभते ॥ १३० ॥

मनोनिर्मितसाम्राज्ये नगरे वै सुशोभिते ।
स्वच्छंदं विहरत्येव स्वयं स्वलीलया यथा ॥ १३१ ॥

टीका—यथा नरः साम्राज्यं तत्र च सुशोभितं नगरं मनसा निर्माय तत्र स्वयं स्वलीलया स्वच्छंदं विहरत्येव । तस्य विहरणं तु प्रतीतिमात्रं न वास्तवम् ॥ १३१ ॥

तथैव दृश्यद्रष्टृत्वं लीलामात्रं प्रतीयते ।
तथापि दृश्यलीनत्वे द्रष्टृत्वमपि लीयते ॥ १३२ ॥

टीका:—तथैव दृश्यद्रष्टृत्वं विलासमात्रं वर्तते । तथापि यदा दृश्यं लीनं भवति तदा द्रष्टृत्वमपि विलीयते । द्रष्टरि यद् द्रष्टृत्वं तद् दृश्यसापेक्षमेव न वास्तवम् ॥ १३२ ॥

गते साक्षेपभावे तु निरपेक्षं हि राजते ।
न द्रष्टृत्वं न दृश्यं वा तत्र किंचित्प्रतीयते ॥ १३३ ॥

पदार्थसहितोन्वयः—सापेक्षद्रष्टृदृश्यभावे गते तु ( विलीने सति ) निरपेक्षं दृङ्मात्रस्वरूपं विराजत एव । अस्मिन् दृङ्मात्रस्वरूपे दृष्टृत्वं वा दृश्यं वा किंचिदपि न प्रतीयते ॥ १३३ ॥

सापेक्षभावः कथं विलीनो भवति तद् दृष्टांतेन स्पष्टीक्रियत एक इति ।

एकोनैको यथा शून्यं तत्तेनैव निषिध्यते ।
दृश्येन सह द्रष्टृत्वं तथैव संविलीयते ॥ १३४ ॥

टीका—( एक+ऊन+एकः ) एकस्मादेकमूनं कृत्वा ( १–१=० ) शून्यं लभ्यते । अत्र एक एकेन निषिध्यते । प्रथम एको द्वितीयेनैकेन निषिध्यमानः सन्नुभावपि शून्यतां व्रजतः । तथैव दृश्येन सह द्रष्टृत्वमपि स्वरूपे संविलीयते ॥ १३४ ॥

महाकल्पस्य पूरात् प्रागब्धिभेदो विदृश्यते ।
आगते तु महाकल्पे जलमात्रं प्रतीयते ॥ १३५ ॥

टीका——यावत् कल्पांतरस्य पूरो नागतस्तावदयं सागरो ( अयं महासागर इयं नद्ययं नद इत्यादिभेदः प्रतीतो भवति । परं कल्पांते जलमात्रं प्रतीयते ॥ १३५ ॥

सहजत्रिपुटीभासेन व्यवहारो भविष्यति ।
प्रतिक्षणं न केनापि तत्राहमिति मन्यते ॥ १३६ ॥

पदार्थसहितोन्वयः—व्यवहारमात्रः सहजात्रिपुटीभासेन भविष्यति । तत्र प्रतिक्षणं कोऽप्यहंतां न स्वीकरोति । व्यवहारो निरहंकारत्वेनैव यत्र तत्र भवतीति भावः ॥ १३६ ॥

व्यवहारेऽपि सूक्ष्मत्वमत्र किंचित्प्रतीयते ।
न विषयानुसंधाने त्रिपुटीत्वं हि भाव्यते ॥ १३७ ॥

टीकाः—व्यवहारे सुशोधिते सत्यत्रापि किंचित्सूक्ष्मत्वं प्रतीयते । तत् किम् । विषयानुसंधानकाले त्रिपुटीकल्पना ( अहेमेनं विषयमनुसंदधामीति ) एतत् केनापि निश्चयेन न भाव्यते ॥ १३७ ॥

वक्तव्यं न च चिन्मात्रे किमप्यात्मनि वर्तते ।
सर्वकार्येऽप्यतो निर्विकारत्वेन स राजते ॥ १३८ ॥

टीका—चिन्मात्र आत्मनि किमपि वक्तव्यं ( उक्तिविषयत्वं ) संकेताभावाद् नच ( नैव ) वर्तते । अतः सर्वकार्येऽपि स निर्विकारः शोभते । आत्मा स्वप्रकाशः सन् निर्देशस्याविषयोऽस्ति । यद् यत् परप्रकाश्यमस्ति तत् तद् वाग्विषयं विकारि च वर्तते । आत्मा न तथा । विकारिणि कार्यवर्गेऽनुगतोऽपि स्वयं निर्विकार एव राजते ॥ १३८ ॥

बोधोदये सुनिर्भ्रांतेऽहं ब्रह्मेति न प्रत्ययः ।
भवतीति हि सिद्धांतो भवेच्चेद्बद्धतैव सा ॥१३९॥

टीका—सुनिर्भ्रांते ( अत्यंतभ्रांतिरहिते ) बोधोदयेऽहं ब्रह्मेति प्रत्ययो न भवतीति हि ( निश्चयेन ) सिद्धांतः । चेत् ( यदि ) भवेत् तर्हि सा बद्धतैव । प्रबुद्धो ब्रह्मरूपेण वर्तत एवं तस्य प्रत्ययो नेत्यर्थः ॥ १३९ ॥

यतो ज्ञानविलासोऽयं न किंचिद्भवति पृथक् ।
ग्राह्यं त्याज्यं गुणो दोषो वा न तस्माद्धि संभवेत् ॥१४०॥

पदार्थसहितोऽन्वयः—यतः ( यस्मात्कारणात् ) अयं ज्ञानविलासः स्वरूपतः पृथक् किंचिद् न भवति । तस्माद् ग्राह्यं वा त्याज्यं वा गुणो वा दोषो वा हि ( निश्चयेन ) न संभवेत् । कुत्र । ज्ञानविलासे ॥ १४० ॥

नित्यसिद्धे स्वयंप्रभे साध्यसाधनता वृथा ।
सा सर्वा भ्रांतिजन्यैव न जागरे विवेकजा ॥ १४१ ॥

पदार्थसहितोन्वयः—नित्यसिद्धे स्वयंप्रभे ( स्वप्रकाशरूपे ) साध्यसाधनता ( साधनेन सिद्धिः ) वृथा । सा ( साधनतः सिद्धिः ) सर्वा भ्रांतिजन्या ( भ्रमोत्पन्ना ) एव । जागरे ( प्रबोधे ) विवेकजा ( विवेकेन सिद्धा ) नैव ॥ १४१ ॥

प्रतीयमान एतस्मिन् निवर्त्यं न प्रतीयते ।
केवलास्फुररूपेण बोधावधिः स कथ्यते ॥ १४२ ॥

टीका—प्रतीयमान एतस्मिन् ( आत्मनि ) निवर्त्यं ( निवारणार्हं किमपि ) न प्रतीयते । केवलास्फुररूपेण ( केवलं निर्विशेषचैतन्यरूपेण ) या प्रतीतिः सा बोधावधिः ( अतःपरं ज्ञातव्यं किंचिदपि नावशिष्यते ) । आत्मविज्ञाने प्रपंचस्फुटमिथ्यात्वबोधो भवति स एव बोधावधिरित्यर्थः ॥ १४२ ॥

असह्यं निर्विशेषत्वं कुतस्तु सविशेषता ।
अतस्तयोरभावे वै स्वस्वरूपेण काशते ॥ १४३ ॥

टीका—स्वरूपे निर्विशेषत्वकल्पनापि न सह्यते तर्हि सविशेषत्वकल्पना कुतः । अतः सविशेषनिर्विशेषादिं कमपि भावं विना स्वस्वरूपेणैव प्रकाशते ॥ १४३ ॥

दृश्यद्रष्टृविहीनो वा तद्रूपेण स्थितोऽपि वा ।
एतौ भावौ न हि स्वस्मिन्नाश्चर्यं केवलं महत् ॥ १४४ ॥

पदार्थसहितोन्वयः—स्वस्मिन् दृश्यद्रष्टृविहीनो भावो वा दृश्यद्रष्टृसहितो भावो वैतौ भावौ हि ( निश्चयेन ) न वर्तेते । एतदाश्चर्यं न । कथं न । केवलं महत् ( एतद् महन्नामात्मस्वरूपं केवलं नाम निर्विकल्पम् ) ॥ १४४ ॥

दृश्ये द्रष्टरि लीनेऽपि द्रष्टा तु ह्यवशिष्यते ।
परं न द्रष्टृसंकेतस्तस्मिन् कदापि संभवेत् ॥ १४५ ॥

पदार्थसहितोन्वयः—द्रष्टा दृश्यं च यदा विलीयेते तदा दृङ्मात्रस्वरूपं तु ( निश्चयेन ) अवशिष्यते ) परं तस्मिन् द्रष्टृसंकेतः ( अहं द्रष्टेति कल्पना ) न कदापि संभवेत् ॥ १४५ ॥

दृङ्मात्रस्वरूपं सदृष्टांतं कथयति श्लोकद्वयेन नष्ट इति ।

नष्टे पूर्वतरंगे हि यावदन्यो न जायते ।
तस्मिन् संधौ प्रतीयेत जलमात्रं हि केवलम् ॥ १४६ ॥



निद्रावरणनाशे हि जागृत्युदयपूर्वतः ।
तत्संधौ पुरुषस्यापि यथा स्थितिर्हि वर्तते ॥ १४७ ॥

पदार्थसहितोन्वयः—पूर्वतरंगे नष्टे सति यावदन्यो हि (निश्चयेन) न जायते तस्मिन् संधौ केवलं जलमात्रं हि प्रतीयेत । निद्रावरणनाशादनंतरं जागृत्युदयपूर्वकाले हि तत्संधौ पुरुषस्यापि स्थितिर्हि यथा दृङ्मात्रस्वरूपा वर्तते ॥ १४६ ॥ १४७ ॥

पूर्वं हि विषयं त्यक्त्वा यावन्नान्यत्र स्थीयते ।
निर्विकारा तदा दृष्टिः स्वयमेवावशिष्यते ॥ १४८ ॥

पदार्थसहितोन्वयः—पूर्वं विषयं हि त्यक्त्वा यावद् दृष्टिरन्यत्र (अन्यस्मिन् विषये) न स्थीयते तदा (तावत्) सा निर्विकारत्वेन स्वयमेवावशिष्यते (दृङ्मात्ररूपा वर्तते) ॥ १४८ ॥

यथा च दिवसांतेऽपि रात्र्यागमनपूर्वतः ।
नभस्तत्संधिवेलायां स्वयमेव प्रकाशते ॥ १४९ ॥

पदार्थसहितोन्वयः—यथा च दिवसस्यांतेऽपि यावद् रात्रिर्नागता तावत् तस्यां संधिवेलायामाकाशः स्वयमेव प्रकाशते ॥ १४९ ॥

रेचकानंतरं यद्वत् पूरकस्यापि पूर्वतः ।
कुंभक एव तत्संधौ स्वयमेव विशोभते ॥ १५० ॥

पदार्थसहितोन्वयः—यद्वद् रेचकादनंतरं पूरकस्यापि पूर्वकाले तत्संधौ कुंभक एव स्वयं निश्चयेन विशेषेण शोभते ॥ १५० ॥

दृश्यद्रष्टृत्वभावो वै त्यक्तः पुनश्च नो धृतः ।
तस्यां तु मध्यवेलायां शुद्धसाक्ष्यवशिष्यते ॥ १५१ ॥

टीका——दृश्यद्रष्टृत्वभावो वै त्यक्तः पुनश्च स न धृतः । तस्यां तु मध्यवेलायां शुद्धसाक्षी ( दृङ्मात्रं ) अवशिष्यते । अत्र संमतिश्लोको लघुवाक्यवृत्तौ—नष्टे पूर्वे विकल्पे तु यावदन्यस्य नोदयः । निर्विकल्पकचैतन्यं स्पष्टं तावद्विभासते ॥ १ ॥ संमतिश्लोकस्य टीका—एका वृत्तिर्लीना द्वितीया च नोत्पन्ना । एतादृशी या वृत्तिद्वयमध्यता तस्यां मध्यरूपेण यद्वर्तते तदेव सर्वसुखनिधानं । तस्मिन्नेव च सर्वस्याप्यस्य प्रपंचस्य जन्मादि भवति तदेव च लयस्थानमित्युच्यते । एतदेव च विकुंठपदम् । एतद् ब्रह्मेंद्रप्रजापत्यादिरूपं प्रज्ञानघनं ब्रह्म । तदर्थमेव शाब्दिकैः शब्द्यते । तार्किकैस्तर्क्यते । मीमांसकैर्मीमांस्यते । योगिभिर्युज्यते । एतदेव च रसरूपेणायुर्वेदरहस्यमलंकारिकाणां समयश्च । एतद् यत सर्वज्ञं सर्वशक्ति सर्वेश्वरं तदेव सर्वोपनिषद्भिरद्वैतशास्त्रैश्च मोक्ष इत्युच्यते । एतदेव स्वरूपमिति निश्चित्य वृत्त्युदयेपि बंधो न प्रतिपद्यते देहावसाने चैतद्रूपे वर्तते । अतस्तदेव संपादनीयं तद्भिन्नमेव हेयम् । तदेव श्राव्यं मंतव्यं निदिध्यासितव्यं एष आदेश एष उपदेश एतस्यामेवावस्थायां पूर्वोक्तसर्वविशेषाभावः संभवतीति ॥ १५१ ॥

वृत्त्युदयेपि न क्षतिरित्याह रविरित्यादिभिः ।

रविः प्रकाशरूपोऽपि स्वोदयास्तौ न वेत्ति वै ।
तथा स्वप्रकाशो हि द्रष्टृत्वादि न पश्यति ॥ १५२ ॥

पदार्थसहितोन्वयः—रविः प्रकाशरूपोऽपि स्वीयावुदयास्तौ न वै वेत्ति। तथा स्वप्रकाश आत्मा दृश्यद्रष्टृत्वादिकं हि (निश्चयेन) न पश्यति ॥ १५२ ॥

दृश्यत्वेन प्रतीयेत द्रष्टृत्वेन हि वा पुनः।
स्वरूपस्वसुखेनैव तदाकारेण भासते ॥ १५३ ॥

पदार्थसहितोन्वयः:—दृश्यत्वेन वा द्रष्टृत्वेन वा पुनर्या प्रतीतिस्तस्यां प्रतीत्यां तत्तदाकारेण स्वरूपसुखमेव प्रकाशते ॥ १५३ ॥

गंगा प्रवाहरूपेण सिंधुरूपेण वा भवेत्।
कापि वै न जलत्वेन भेदवार्ता तु दृश्यते ॥ १५४ ॥

पदार्थसहितोन्वयः—गंगा प्रवाहरूपेण सिंधुरूपेण वा भवेत्। तु (परं) तस्यां जलत्वेन (जलदृष्ट्या) कापि भेदवार्तोभयरूपेपि नैव दृश्यते ॥ १५४ ॥

घृतं तु पिंडरूपेण द्रवत्वेनैव वा पुनः।
प्रतीतं भेदवार्ता न स्पृशति घृतमात्रतः ॥ १५५ ॥

पदार्थसहितोन्वयः—घृतं तु पिंडरूपेण पुनर्द्रवत्वेनैव वा प्रतीतमपि भेदवार्ता न स्पृशति (तस्मिन् भेदो न भवति) घृतमात्रत्वात् ॥ १५५ ॥

वह्निश्च वह्निरूपेण ज्वालारूपेण वा भवेत् ।
न तथापि हि तद्रूपे भेदभावः प्रतीयते ॥ १५६ ॥

पदार्थसहितोन्वयः---वह्निः ( अग्निः ) च वह्निरूपेण वा ज्वालारूपेण वा भवेत् । तथापि तद्रूपे ( अग्निरूपे ) भेदभावो न हि प्रतीयते ॥ १५६ ॥

स्वरूपान्न पृथक् किंचिद् दृश्ये द्रष्टरि वा तथा ।
अतो न शुद्धचिन्मात्रे भेदवार्ता हि विद्यते ॥ १५७ ॥

टीका—दृश्ये वा तथा द्रष्टरि वा स्वरूपात् पृथगन्यत् किंचित् न ( किंचिदपि न वर्तते ) अतः शुद्धचिन्मात्रे भेदवार्ता न हि विद्यते कार्यकारणयोरभेदात् । अत्र संमतिश्लोकः---सुवर्णाज्जायमानस्य सुवर्णत्वं च शाश्वतम् । ब्रह्मणो जायमानस्य ब्रह्मत्वं च तथा भवेत् ॥ १ ॥ ( अपरोक्षानुभूतौ ) । संमतिश्लोकटीका—सुवर्णाज् जायमानमलंकारादिकं सुवर्णरूपमेव वर्तते । तथा ब्रह्मणो जातं दृश्यं ब्रह्मरूपमेव ॥ १५७ ॥

नानुभवो भवेत्तत्र यत्र ज्ञानं न वर्तते ।
एतदस्फुररूपे तु वाग्विलासो न संभवेत् ॥ १५८ ॥

पदार्थसहितोन्वयः—यत्र ज्ञानं ( विशेषज्ञानं ) न वर्तते तत्रानुभवो न भवेत् । एतस्मिन् केवलानुभवरूप आत्मानि वाग्विलासो नैव भवेत् ॥ १५८ ॥

एष आत्मविलासस्तूपमाहीनो हि केवलः ।
अत एव च तत्तुल्यः स वै भवितुमर्हति ॥ १५९ ॥

पदार्थसहितोन्वयः—–एष आत्मविलासः केवलः सन् हि ( निश्चयेन ) उपमाहीन एव । अत एव तत्तुल्यश्च स एव भवितुमर्हति ( योग्यो भवति ) ॥ १५९ ॥

रविर्यथा हि स्वेनैव चंद्रश्चंन्द्रेण वा पुनः ।
दीपो यथा च दीपेनोपमेयोऽन्योपमा न वै ॥ १६० ॥

पदार्थसहितोन्वयः—–यथा हि रविः स्वेनैव ( रविणैव ) पुनर्वा चंद्रश्चंद्रेण यथा च दीपो दीपेनोपमेयः । अन्योपमात्र नैव । तथात्मापि निरुपमः ॥ १६० ॥

प्रकाशेऽस्ति प्रकाशो न हेयोपादेयकल्पना ।
जगत्तुल्यात्मरूपेण स्वप्रभत्वेन भासते ॥ १६१ ॥

टीकाः—प्रकाशे प्रकाशोस्ति तत्र ग्रहणत्यागकल्पना नास्ति केवलप्रकाशमात्रत्वात् । जगदप्यात्मरूपेण स्वप्रकाशत्वेन भासते । जगदात्मप्रकाशरूपमेव । तस्मात् पृथक् किंचिदपि नैव । अतो जगत्यपि हेयं वोपादेयं वा नास्तीति भावः ॥ १६१ ॥

विभाति यस्य भासेदं नानारूपात्मकं जगत् ।
स आत्मा स्वप्रभोऽस्त्येवं श्रुतिर्ब्रूते मुहुर्मुहुः ॥ १६२ ॥

पदार्थसहितोऽन्वयः—यस्य ( आत्मनः ) भासा ( प्रकाशेन ) इदं नामरूपात्मकं जगत् विभाति ( विशेषेण भासते ) स आत्मा स्वप्रभः ( स्वप्रकाशस्वरूपः ) अस्ति एवं श्रुतिर्मुहुर्मुहुः ( पुनः पुनः ) ब्रूते ( कथयति ) ॥ १६२ ॥

स्वप्रकाशस्वरूपाद्धै वस्त्वंतरं न विद्यते ।
प्रपंचेऽज्ञानहेतुर्वा वाचारंभणमात्रकः ॥ १६३ ॥

टीका—स्वप्रकाशस्वरूपाद् वस्त्वंतरं ( अन्यत् पृथग् वस्तु ) न वै विद्यते । प्रपंचेऽज्ञानहेतुर्वा वाचारंभणमात्रकः । यतः प्रपंचेऽपि स्वप्रकाशरूपमेवानुगतमस्ति ततः प्रपंचोप्यात्मरूपमेवास्ति । तत्राज्ञानहेतुर्निरर्थकः ॥ १६३ ॥

न केनापि प्रकारेणाज्ञानसिद्धिर्भविष्यति ।
युक्त्यानंत्यप्रेक्षणेनात्यंताभावोऽनुभूयते ॥ १६४ ॥

पदार्थसहितोऽन्वयः—केनापि प्रकारेणाज्ञानसिद्धिर्न भविष्यति । तस्याज्ञानस्यात्यंताभाव एव युक्त्यानंत्यप्रेक्षणेन ( अनंतयुक्तितो विचारे कृतेऽपि ) अनुभूयते ॥ १६४ ॥

यथा दिनकरो देवस्तमःपुंजं न पश्यति ।
रजनीगृहप्राप्तोप्यज्ञानं स्वयंप्रभस्तथा ॥ १६५ ॥

पदार्थसहितोन्वयः—यथा दिनकरो देवः ( सूर्यनारायणः ) रजनीगृहप्राप्तोपि ( रात्रिगृहं प्रति प्राप्तोऽपि ) तमःपुंजं ( अंधकारसमूहं ) न पश्यति तथा स्वयंप्रभ आत्मरामोऽज्ञानं न पश्यत्येव ।। १६५ ।।

इति श्रीज्ञानदेवकृतामृतानुभवस्य संस्कृतभाषांतरे अज्ञानखण्डनं नाम सप्तमं प्रकरणम् ।

---

॥ हरिः ॐ तत्सत् ॥

## ॥ अथ अष्टमं प्रकरणं प्रारभ्यते ॥



**नित्यप्राप्तस्वरूपेऽत्राज्ञानं खलु खपुष्पवत् ।**
**नास्ति निवर्तकं ज्ञानं न चापि साधनक्रमः ॥ १ ॥**

पदार्थसहितोन्वयः—पूर्वस्मिन् प्रकरणे यथा प्रतिपादितं तथात्र नित्यप्राप्तस्वरूपेऽज्ञानं खलु ( निश्चयेन ) खपुष्पवत् ( आकाशपुष्पवत् ) । तस्य निवर्तकं ज्ञानमपि एवमेव । निवृत्त्यर्थं साधनक्रमोपि नास्त्येव । अस्मै स्वतंत्राय कस्य भारोऽस्ति ॥ १ ॥

**अहमस्मि स्वतःसिद्ध उक्तेरस्या असंभवः ।**
**अत्र यदुच्यते किंचिल्लज्जयैव हि तद्भवेत् ॥ २ ॥**

पदार्थसहितोन्वयः—स्वस्वरूपे 'अहं स्वतःसिद्धोऽस्मि' अस्या उक्तेरसंभवोस्ति । अत्र ( स्वस्वरूपं विषयीकृत्य ) यत्किंचिदुच्यते तद्धि ( निश्चयेन ) लज्जयैव भवेत् ॥ २ ॥

स्वरूपे सुखरूपोऽहमित्युक्तिरपि नास्ति हि।
का प्राप्तिस्तत्र वक्तव्या गुरुशास्त्रादिकं तथा ॥ ३ ॥

टीका—स्वरूपेऽहं सुखरूप इत्युक्तिरपि हि ( निश्चयेन ) नास्ति। तत्र का प्राप्तिर्वक्तव्या तथा गुरुशास्त्रादिकं किं वक्तव्यम्। स्वरूपेऽहमिति कल्पनापि नास्ति तर्ह्यहं सुखरूप एषोक्तिः ( वचनं ) कथं संभवेत्। द्वितीयत्वस्याभावे प्राप्यप्रापकभावो न संभवति। तदसंभवे तन्निमित्तकं गुरुशास्त्रादिकमपि तद्वदेव ॥ ३ ॥

संविन्मात्रस्वरूपे मे कैवल्यमपि हीयते।
अतः पूर्णे स्वरूपेऽस्मिंस्तदपेक्षा न विद्यते ॥ ४ ॥

टीका—ज्ञप्तिमात्रस्वरूपे मयि केवलोऽहमित्यभिमानोपि गलति। अतोस्मिन् पूर्णे स्वरूपे तस्यं कैवल्यस्यापेक्षा न विद्यते। नित्यमुक्ते ज्ञप्तिमात्रस्वरूपे मोक्षस्य कल्पनापि गलत्येव। अस्मिन् मम पूर्णस्वरूपे मोक्षस्येच्छापि न संभवनीयैतत् साहजिकम्। जीवत्वादि द्वितीयत्वस्याभावे मोक्षशब्दोऽप्यर्थहीन एव ॥ ४ ॥

मत्स्वरूपस्य निर्धारे श्रुतिः शास्त्रं च कुण्ठते।
अनुभवोऽपि मां ज्ञातुं नोदितोऽस्ति कदाचन ॥ ५ ॥

टीका—मत्स्वरूपस्य ( आत्मस्वरूपस्य ) निर्धारे श्रुतिः शास्त्रं च कुण्ठते ( स्तब्धे जाते

नेति नेति यतोवाचो निवर्तन्ते अप्राप्य मनसा सहेति श्रुतेः ) मां ज्ञातुं ( आत्मानं विषयीकर्तुं ) अनुभवः कदाचिदपि नोदितोस्ति । यत आत्मानुभवरूप एव तत एकस्यैव विषयविषयित्वमशक्यं स्वस्कंधारोहणवत् ॥ ५ ॥

गुरुशास्त्रनिमित्तेन सुखभोगो न युज्यते ।
मय्यस्फुरस्वरूपे ह्यहमित्यपि न संभवेत् ॥ ६ ॥

टीका—गुरुशास्त्रद्वारा बोधितो जीव आत्यंतिकसुखमाप्नुयादिति या भावना सा न प्रयुक्ता । कथं । अस्फुरस्वरूपे मयि अहमित्यपि हि ( निश्चयेन ) न संभवेत् ॥ ६ ॥

भावाभावविनिर्मुक्तं मत्स्वरूपं विकाशते ।
नात्राश्चर्यकरं किंचिच्छून्यशंकापि नास्ति च ॥ ७ ॥

टीका—भावकल्पनां वाऽभावकल्पनां वा परित्यज्य मे स्वरूपं प्रकाशते । निर्विकल्पस्वरूपे मय्येतत् किंचिदप्याश्चर्यकरं न । अत्र शून्यशंकापि परित्यक्तव्या । शून्यप्रकाशक आत्मा कथं शून्यं भवेत् ॥ ७ ॥

यस्य मम स्वरूपं वै मनोवाचामगोचरम् ।
तस्य मे स्वप्रकाशस्य गुरुशास्त्रादि किं वदेत् ॥ ८ ॥

पदार्थसहितोन्वयः—यस्य मम स्वरूपं वै ( निश्चयेन ) मनोवाचामगोचरं ( अविषयं ) स्वप्रकाशस्य तस्य मे ( मां विषयीकृत्य ) गुरुशास्त्रादि किं वदेत् । किमपि वक्तुं समर्थं नैवेति भावः ॥ ८ ॥

अनुभवस्वरूपेऽनुभविता न च विद्यते ।
अतोऽसावनुभूतिर्हि स्वस्मिन्नेव विलीयते ॥ ९ ॥

पदार्थसहितोन्वयः—केवलेऽनुभवस्वरूपेऽनुभविता न च ( नैव ) विद्यते । अतोसाऽवनुभूतिः स्वस्मिन्नेव विलीयते ( अनुभवकल्पना स्वरूपे विलीना भवति ) ॥ ९ ॥

ज्ञातं येनात्मनस्तत्त्वं ज्ञातं तेन न किंचन ।
अविदुषैव ज्ञातं च न वेद्यो वेदको यतः ॥ १० ॥

टीका—येनात्मनस्तत्त्वं ज्ञातं ( आत्मनस्तत्त्वं मया ज्ञातमिति योऽभिमन्यते ) तेन किंचन ( किंचिदपि ) न ज्ञातं अविज्ञातं विजानतामिति श्रुतेः । यत आत्मा वेद्यो वा वेदको वा न वर्तते ततोऽविदुषैव ( मया स्वरूपं न ज्ञातमिति यो मन्यते तेनैव ) ज्ञातम् ( साक्षात्कृतमात्मनो वेदनमात्रत्वात् ) ॥ १० ॥

ज्ञानाज्ञाने इदं द्वंद्वं स्वोदरेऽतो निवेश्य च ।
स्वस्मिन्नेव चिदाकाशे चिदादित्यः प्रकाशते ॥ ११ ॥

पदार्थसहितोन्वयः—विद्वत्स्थितिप्रदर्शनेन प्रकरणमुपसंहियते । अतः ( अस्मात्कारणात् ) ज्ञाना-

ज्ञाने इदं द्वंद्वं स्वोदरे ( सर्वोऽयं वस्तुविलास इत्याकारकेऽनुभवे ) निवेश्य ( विलीनं कृत्वा ) चिदाकाशस्वरूपे स्वस्मिन् ( स्वमहिम्नि ) एव चिदादित्यः ( ज्ञप्तिसूर्यः ) प्रकाशते ॥ ११ ॥

इतिश्रीज्ञानदेवकृतामृतानुभवस्य संस्कृतभाषांतरे ज्ञानाहंताखंडनं नामाष्टमं प्रकरणम् ।

---

॥ हरिःॐ तत्सत् ॥

## ॥ अथ नवमं प्रकरणम् ॥

पूर्वोक्तप्रकारेणात्मविज्ञाने निश्चिते विदुषि यत् सार्वात्म्यं भवति तदेवंप्रकारेण तस्मिन् विदुषि भोक्तृभोग्यादिकमभेदेनैव वर्तते इत्याह आमोद इति ।

आमोदो घ्राणरूपः स्याच्छब्दः श्रवणरूपकः ।
आदर्शश्चापि नेत्रं का ग्राह्यादिस्त्रिपुटी तदा ॥ १ ॥

पदार्थसहितोन्वयः—आमोदः ( घ्राणग्राह्यो गुणः ) घ्राणरूपःस्यात् । शब्दः श्रवणरूपो भवेत् । आदर्शः ( दर्पणः ) अपि नेत्रं स्यात् । तदा ग्राह्यादिस्त्रिपुटी का ( तदा त्रिपुटी न कापि पृथग्भवितुमर्हति ) ॥ १ ॥

अंबुजं रविरूपं वै जिह्वा यत्र रसात्मिका ।
चकोर एव चंद्रः स्यान्न भेदस्तत्र विद्यते ॥ २ ॥

पदार्थसहितोऽन्वयः—यत्र अंबुजं ( कमलं ) वै ( निश्चयेन ) रविरूपं ( सूर्यस्वरूपं ) जिह्वा च रसात्मिका ( रसरूपा ) तथा चकोर एव चंद्ररूपः स्यात् तत्र भेदो न विद्यते। विद्वान् आत्मनः पृथक् किमपि न पश्यति ॥ २ ॥

पुष्पं भ्रमररूपेण युवती च नराकृतिः ।
शय्यात्मिकोऽपि निद्रालुः प्रतीयते ह्यभेदतः ॥ ३ ॥

प०ऽन्व०—पुष्पं भ्रमररूपेण युवती च नराकृतिः ( नररूपेण ) निद्रालुः ( निद्रितः ) अपि शय्यात्मिकः ( शय्यारूपेण ) एवमेते हि ( निश्चयेन ) अभेदतः अभेदेनैव प्रतीयंते ( वर्तन्ते ) ॥ ३ ॥

दिवा नेत्रपिधानेन चित्रवर्णः प्रतीयते ।
न स नेत्रात् पृथक् कश्चिन्नेत्रमेवानुभूयते ॥ ४ ॥

पदार्थसहितोऽन्वयः---दिवा ( दिनकाले ) नेत्रपिधानेन ( नेत्रमीलनेन ) चित्रवर्णः ( चित्रविचित्ररंगः ) प्रतीयते ( दृश्यते ) । स नेत्रात् पृथक् ( अन्यत् ) कश्चिन्न । नेत्रमेव तद्रूपेणानुभूयते ॥ ४ ॥



भोक्तृभोग्यादिभेदेन कर्तृकर्मादिकेन वा ।
द्रष्टृदृश्यादिकेनापि त्रिपुटी नैव संभवेत् ॥ ५ ॥

पदार्थसहितोन्वयः—भोक्ता भोग्यं भोगः कर्ता कार्यं कर्म द्रष्टा दृश्यं दर्शनमेतादृशी कापि त्रिपुटी विद्वद्दृष्ट्या नैव संभवेत् ॥ ५ ॥

ब्रह्मविदः स्वरूपे न स्फुरणमपि विद्यते ।
कुतःस्यात त्रिपुटी तत्र विलसेत्तु स्वयं हि सः ॥ ६ ॥

पदार्थसहितोन्वयः—ब्रह्मविदः ( आत्मानं ब्रह्मस्वरूपेण यो वेत्ति तस्य ) स्वरूपे स्फुरणं ( अहमित्येतत् ) अपि न विद्यते । तत्र ( तस्य स्वरूपे ) त्रिपुटी कुतः स्यात् ( द्रष्टृदृश्यादिका सा कथंचिदपि न संभवेत् ) स स्वयं ( स्वरूपेण ) हि ( निश्चयेन ) विलसेदेव ॥ ६ ॥

न कृता त्रिपुटी हेम्नि किरीटकटकांगदैः ।
लिंगभेदेऽपि भेदोत्र विचारे न च दृश्यते ॥ ७ ॥

पदार्थसहितोन्वयः—हेम्नि (सुवर्णे) किरीटकटकांगदैः ( किरीटो मुकुटं कटकं करभूषणमंगदं बाहु-भूषणमेतैः ) त्रिपुटी न कृता ( एतेन त्रिपुटी नैवोत्पद्यते ) यद्यप्येतेषु किरीटकटकांगदेषु पुन्नपुंस-कादिलिंगभेदो दृश्यते तथापि विचारे कृतेऽत्र ( सुवर्णे ) भेदो नैव प्रतीयते । वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः ॥ ७ ॥

कल्लोलग्रहणार्थं चेत् करः केन प्रसार्यते ।
वार्येव प्राप्यते तेन न तरंगास्तु कर्हिचित् ॥ ८ ॥

पदार्थसहितोन्वयः—चेत् ( यदि ) कल्लोलग्रहणार्थं ( तरंगग्रहणहेतुना ) करः ( हस्तः ) केन ( केनचिन्नरेण ) प्रसार्यते ( प्रसृतः )। तेन वारि ( जलं ) एव प्राप्यते तु ( परं ) तरंगाः कर्हिचित् ( कदाचिदपि ) न ( नैव प्राप्यंते ) ॥ ८ ॥

विषयेंद्रियव्यापारे प्रतीतेऽपि स्वभावजे।
न ह्यात्मव्यतिरेकेण किंचित् तत्रानुभूयते ॥ ९ ॥

पदार्थसहितोन्वयः—स्वभावजे ( स्वाभाविके ) विषयेंद्रियव्यापारे ( इंद्रियाणां विषयेषु व्यवहारे ) प्रतीतेऽपि तत्र ( तस्मिन् व्यवहारे ) आत्मव्यतिरेकेण ( आत्मनो भिन्नत्वेन ) न किंचिद् हि ( न किमपि ) अनुभूयते ॥ ९ ॥

चक्षुरादींद्रियैर्भोगे स कर्पूरस्तु केवलः।
रूपस्पर्शरसामोदेष्वेक एवानुभूयते ॥ १० ॥

पदार्थसहितोन्वयः—चक्षुषा रूपभोगे त्वचा स्पर्शभोगे जिह्वया रसभोगे घ्राणेनचामोदभोगे केवलः स एक एव कर्पूरोऽनुभूयते। भेदस्तु इंद्रियकृतः कर्पूरस्वरूपे स नैव वर्तते ॥ १० ॥



तथा विषयभोगेषु प्रवृत्तैरिंद्रियैरपि।
एकं ब्रह्मसुखं प्राप्तं विषयो न हि विद्यते ॥ ११ ॥

पदार्थसहितोन्वयः—तथा विषयभोगेषु प्रवृत्तैरिंद्रियैरप्येकं ब्रह्मसुखमेव प्राप्तं ( अनुभूतं ) विषयो हि ( निश्चयेन ) न विद्यते । अनुभूते ब्रह्मसुखे विषया न वर्तन्ते ॥ ११ ॥

इक्षौ खण्डादिकं दृष्टं रसे भेदो न दृश्यते ।
पूर्णचंद्राकाशस्त्वभेदेनैवानुभुयते ॥ १२ ॥

टीका—यद्यपीक्षौ खण्डादिकं दृष्टं तथापि तस्मिन् रस एवानुस्यूतोऽस्ति । रसस्वरूपे भेदो न प्रतीयते । पूर्णचंद्रप्रकाशे कलाभेदो न प्रतीयते स त्वभेदेनैवानुभूयते । एवं सर्वत्रात्मैवानुभूयते ॥ १२ ॥

चंद्रे न ज्योत्स्नया भेदो वृष्ट्या वा सागरे यथा ।
विषयेंद्रियसंबंधेऽभिन्नं वस्तुसुखं तथा ॥ १३ ॥

पदार्थसहितोन्वयः—यथा चन्द्रे ज्योत्स्नया ( चंद्रप्रकाशेन ) सागरे वा वृष्ट्या ( मेघवर्षणेन ) भेदो न भवति तथा विषयेंद्रियसंबंधे वस्तुसुखमभिन्नमेव वर्तते । वस्तुसुखं ( आत्मसुखम् ) ॥ १३ ॥

अतः स्ववचसा यः को वाग्व्यापारः कृतो भवेत् ।
तन्मौनमेव नूनं स्यात्समाधिश्च न हीयते ॥ १४ ॥

पदार्थसहितोन्वयः—अतो विदुषां स्ववचसा ( वाचया ) यः को वाग्व्यापारः ( वदनं ) कृतो भवेत् तत् ( वदनं ) नूनं ( निश्चयेन ) मौनमेव स्यात् । समाधिश्च न हीयते ( यतस्तन्मौनमेव ततो विदुषः समाधिरचला वर्तेत ) ॥ १४ ॥

लौकिके वैदिकेऽन्यस्मिन् व्यवहारे कृतेऽपि हि ।
भवेन्न कर्मसंबंधो विदुषां क्वापि कर्हिचित् ॥ १५ ॥

टीका——लौकिके वैदिकेऽन्यस्मिन् व्यवहारे कृतेऽपि विदुषां हि (निश्चयेन) क्वापि कर्हिचित् कर्मसंबंधो न भवेत् । तेषु व्यवहारेण किंचिदपि न्यूनाधिक्यं न भवेत् । यत एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयानिति श्रुतेः। विदुषामात्मसमाधिर्व्यवहारेऽपि न हीयते ॥ १५ ॥

आत्मज्ञाने जाते विषयनिवृत्तिः स्वयमेव स्यात् ।

तमोग्राहक्रियार्थं स्यादुद्युक्तो भास्करो यदि ।
तमो न प्राप्यते तेन यत्स्वरूपेण शोभते ॥ १६ ॥

पदार्थसहितोन्वयः—यदि भास्करस्तमोग्राहक्रियार्थं (अंधकारग्रहणाय) उद्युक्तः स्यात् । तेन तमो न प्राप्यते यत् (यतः) स स्वरूपेण (स्वप्रकाशरूपेण) शोभते ॥ १६ ॥

स्वप्ने यथा प्रियं मित्रं कोप्यालिंगितुमुद्यतः ।
एकाक्येव स्वयं तिष्ठेज्जाग्रत्सन्नप्ययत्नतः ॥ १७ ॥

टीका—यथा स्वप्ने कोऽपि प्रियं मित्रमालिंगितुमुद्यतः स जाग्रत् सन्नयत्नतोऽपि स्वयमेकाक्ये- व तिष्ठेत् । स्वप्नस्य जाग्रन्निवर्त्यत्वात् स्वप्नकृतभेदेन जाग्रन्निष्ठमेकाकित्वं यथा न हीयत एवं ज्ञान- कृतात्मसमाधिरपि मिथ्याव्यवहारेण न लुप्यते ॥ १७ ॥

तथा विषयसान्निध्ये ज्ञो विषयीव लक्ष्यते ।
विषयसंगनिर्मुक्तो निर्विकारी त्वयं स्वयम् ॥ १८ ॥

पदार्थसहितोन्वयः—तथा ज्ञः ( आत्मात्मविद्वा ) विषयसान्निध्ये विषयीव लक्ष्यते ( दृश्यते ) । तु ( परं ) अयं ( आत्मा ) स्वयं विषयसंगान्निर्मुक्तः ( नितरां मुक्तः ) निर्विकार्येव तिष्ठेत् ॥ १८ ॥

यमाद्यष्टांगयोगस्त्वंगैः सहात्र विलीयते ।
स दिवाचंद्रवद् व्यर्थोऽस्मिन्नित्यसिद्धयोगिनि ॥ १९ ॥

टीका--यमादिः ( यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टांगानि ) अष्टांगयोगोऽगैः सहात्र ( आत्मस्वरूपे ) विलीयते । सोऽस्मिन् नित्यसिद्धयोगिनि दिवा चंद्रवद् व्यर्थः।सोऽष्टांगयोगो नित्यसिद्धे निजरूपे चित्सूर्य उपयुक्तो न । यथा दिवा सूर्यसान्निध्ये चंद्रोऽनुपयुक्तः॥१९॥

शास्त्रीया लौकिकी वापि प्रवृत्तिर्यत्र नास्ति च ।
स्वप्रत्ययेन सर्वत्र प्राज्ञश्चरति सर्वदा ॥ २० ॥

पदार्थसहितोन्वयः—यत्र ( स्वस्वरूपे ) शास्त्रीया लौकिकी वापि प्रवृत्तिर्नास्ति । प्राज्ञः ( आत्मवित् ) सर्वदा सर्वत्र स्वप्रत्ययेन ( आत्मप्रत्ययेन ) चरति । विद्वान् शास्त्रादेर्विधेयो न वर्तते ॥ २० ॥

द्वैतभासे प्रतीतेपि विदुष्यद्वैतपूर्णता ।
सुखदुःखादिभेदेऽपि दृढमद्वैतमेव हि ॥ २१ ॥

पदार्थसहितोन्वयः—विदुषि द्वैत भासे प्रतीतेऽप्यद्वैतपूर्णता ( पूर्णाद्वैतस्थितिः ) वर्तते । सुखदुःखादिभेदेऽपि ( सुखदुःखादिद्वंद्वे प्रतीतेऽपि ) अद्वैतं ( अद्वैतस्थितिः ) हि दृढं ( अचलं ) वर्तत एव ॥ २१ ॥



देहात्मबुद्धिवद्यस्य ब्रह्मबुद्धिर्दृढा भवेत् ।
न भज्यभजकौ तस्य कैवल्यमप्यणूकृतम् ॥ २२ ॥

पदार्थसहितोन्वयः—यस्य ( विदुषः ) देहात्मबुद्धिवत् ( देहे यथाऽसंभावनाविपरीतभावन विनैवात्मबुद्धिस्तद्वत् ) ब्रह्मबुद्धिः ( अहं ब्रह्मास्म्येषा भावना ) दृढा अविचालिता ) भवेत् । तस्य भज्यभजकौ न ( उपास्योपासकभेदो न ) तेन कैवल्यमपि ( मोक्षोऽपि ) अणूकृतम् ( तुच्छीकृतः ) ॥ २२ ॥

गृहे संचरतो नुस्तु श्रमो भवेद्यथेप्सितम् ।
विश्रांतिमभिवाञ्छेच्चेत् सा तु यत्नं विना भवेत ॥ २३ ॥

पदार्थसहितोन्वयः—यदि गृहे यथेप्सितं ( यथेष्टं ) संचरतो नुः ( नरस्य ) तु श्रमो भवेत् स विश्रांतिं चाभिवांछेत् ( इच्छेत् ) चेत् सा तु यत्नं विना भवेत् ॥ २३ ॥



स्वच्छंदवर्तिनो ज्ञस्य सुनिश्चलात्मनस्तथा ।
न कुत्रापि कदाचित् स्याद् हेयोपादेयकल्पना ॥ २४ ॥

पदार्थसहितोन्वयः—तथा सुनिश्चलात्मनः ( यस्य बुद्धिरात्मस्वरूपे सुस्थिरा जाता ) स्वच्छंदवर्तिनः ( स्वेच्छानुरूपं वर्तनं यस्य तस्य ) ज्ञस्य ( विदुषः ) कुत्रापि कदाचिदपि हेयोपादेय-कल्पना ( इदं ग्राह्यमिदं त्याज्यमिति कल्पना ) न स्यात् । सर्वत्रात्मदर्शित्वात् ॥ २४ ॥

स्मरणास्मरणे तस्मिन् स्तो नोत्कर्षेण कर्हिचित् ॥
सर्वोऽपि व्यवहारोऽस्य विनाग्रहेण वर्तते ॥ २५ ॥

पदार्थसहितोन्वयः—तस्मिन् ( विदुषि ) स्मरणास्मरणे ( स्मरणं विस्मरणं च ) उत्कर्षेण ( प्राबल्येन ) कर्हिचिन्न स्तः । अस्य ( विदुषः ) सर्वोऽपि व्यवहारो विनाग्रहेण वर्तते । यतस्तास्मिन् सत्य-बुद्धिर्न वर्तते ॥ २५ ॥

स्वेच्छाचारो विधिस्तस्य समाधिरपि स्वैरता ।
नोत्कृष्टत्वं च मोक्षस्य किमपरैः फलोदयैः ॥ २६ ॥

टीका—तस्य ( विदुषः ) स्वेच्छाचारः ( स्वेच्छानुरूपं वर्तनं ) विधिः स्वैरता ( स्वाभाविकं यद्यत् क्रियते तत्तत् ) समाधिरपि ( एव ) मोक्षस्य नोत्कृष्टत्वं ( महत्त्वं ) तर्ह्यपरैः फलोदयैः किम् । विदुषः सहजसमाधिर्वर्तते । अतः स निष्कर्तव्यः शोभते । तस्य कार्यं न विद्यते ॥ ( भगवद्गीता ) ॥ २६ ॥

साध्यसाधकयोरैक्यं तद्दृष्ट्या देवभक्तयोः।
विश्वमेकांतरूपं च द्वैतवार्तापि नो भवेत् ॥ २७ ॥

पदार्थसहितोन्वयः—तद्दृष्ट्या (विद्वद्दृष्ट्या) साध्यसाधकयोर्देवभक्तयोः (देवः साध्यो भक्तश्च साधकस्तयोः) ऐक्यं (एकत्वं) वर्तते। विश्वं चैकांतरूपं सर्वत्रात्मदर्शनात् द्वैतवार्तापि नो (न भवेत्। अद्वैतहानिः कदापि न संभवेत् ॥ २७ ॥

स्वयं स देवरूपेण भक्तरूपेण वा भवेत्।
क्वचित् सर्वविनिर्मुक्तः स्वभावेनैव तिष्ठति ॥ २८ ॥

टीका—स (विद्वान्) स्वयं देवरूपेण भक्तरूपेण वा भवेत्। क्वचित् (कदाचित्) सर्वविनिर्मुक्तः (देवभक्तकल्पनाविहीनः) स्वभावेनैव (दृङ्मात्ररूपः) तिष्ठति। विद्वान् कदाचिल्लीलयैतद्विश्वस्य प्रकाशकोऽहमिति भावनां करोति। कदाचिदेतत्प्रकाश्यविश्वरूपेणाप्यहमेव शोभ इति मन्यते। कदाचिच्च निर्विकल्पदृङ्मात्ररूपो विराजते ॥ २८ ॥

परिपूर्णे चिदानन्दे देहादिर्न च संभवेत्।
भ्रमात् प्रतीयमानं तद् भ्रमे शांते न विद्यते ॥ २९ ॥

पदार्थसहितोन्वयः—परिपूर्णे चिदानन्दे देहादिः (देहादि जगत्) न च (नैव) संभवेत्।

भ्रमात् प्रतीयमानं तत् ( देहादि जगत् ) भ्रमे शांते ( निवृत्ते ) न विद्यते ( सत्यत्वेन न प्रतीयते ) ॥ २९ ॥

नित्ये ज्ञानघने शुद्धे द्वैतं नोत्पद्यते कदा ।
कुतः स्यात्तस्य निवृत्तिस्तदर्थं नापि साधनम् ॥ ३० ॥

पदार्थसहितोन्वयः—नित्ये ( शाश्वते ) ज्ञानघने ( अखण्डानुभवस्वरूपे ) शुद्धे ( केवले ) द्वैतं ( देहादि जगत् ) कदा ( कदाचिदपि ) नोत्पद्यते ( उत्पन्नं न भवति )। तर्हि तस्य निवृत्तिः कुतः स्यात्। तदर्थं ( तस्य निवृत्त्यर्थे ) वा साधनमपि कथं संभवेत्। द्वैतं प्रतीतिमात्रं रज्जुसर्पवत्। न वास्तविकम्। यन्नास्त्येव तस्य निवृत्तिरपि वाचारंभणमेव ॥ ३० ॥

सेव्यसेवकभावेन सन्मात्रमेव विद्यते ।
प्रवृत्तिः स्वभावतः स्यात् ततस्तत्रापि भक्तितः ॥ ३१ ॥

पदार्थसहितोन्वयः—यतः सेव्यसेवकभावेन ( देवभक्तरूपेण ) सन्मात्रमेव विद्यते। ततो विदुषः प्रवृत्तिः तत्रापि ( सेव्यसेवकभावेऽपि ) स्वभावतः ( यत्नं विना ) भक्तितः ( पूर्णप्रेम्णा ) स्यात् ॥ ३१ ॥

अर्चनवंदनध्यानजपादिसाधनात्मकः ।
एष प्रपंचमार्गोऽपि सत्स्फुरणेन सिध्यति ॥ ३२ ॥

पदार्थसहितोऽन्वयः—अर्चनं ( पूजनं ) वंदनं ( नमनं ) ध्यानं ( ध्येयाकारेणात्मस्वरूपनिर्धारणं मनोव्यापारः ) जपः ( पूर्वोक्तमनोव्यापाराभिदायकशब्दोच्चारणं ) इत्यादि साधनात्मकः ( साधनरूपः ) एषः प्रपंचमार्गोऽपि सत्स्फुरणेन सिध्यति ( सत्तास्फुरणरूप एवात्मस्वरूप एव ) ॥ ३२ ॥

फलपुष्पादिभिर्धीमानतः स्वं स्वयमर्च्चयेत् ।
इदमात्मार्चनं स्याच्च यावद्देवो विराजते ॥ ३३ ॥

पदार्थसहितोऽन्वयः—अतः ( पूर्वोक्तकारणतः ) धीमान् ( विद्वान् ) स्वं ( आत्मानं ) फलपुष्पादिभिरर्चयेत् । इदमात्मार्चनं च यावद्देवो विराजते ( आत्मसाक्षात्कारपर्यंतं ) स्यात् ॥ ३३ ॥

कोटिदेवैर्गिरौ कीर्णैर्गिरिर्न भिद्यते यथा ।
सेव्यसेवकभावेन नाद्वैतं भिद्यते तथा ॥ ३४ ॥

पदार्थसहितोऽन्वयः—यथा गिरौ कीर्णैः ( घटितैः ) कोटिदेवैर्गिरिर्न भिद्यते ( भेदं न प्राप्नोति ) तथा सेव्यसेवकभावेनाद्वैतं ( अद्वितीयमात्मतत्त्वं ) न भिद्यते ॥ ३४ ॥

यथेष्टं पूजयेद्देवं स्वस्मिन्नोचेत् सुखी भवेत् ।
पूजयाऽपूजया वापि न स्तो वृद्धिक्षयौ शिवे ॥ ३५ ॥

पदार्थसहितोऽन्वयः—देवं यथेष्टं पूजयेन्नोचेत् स्वास्मिन् सुखी भवेत् । शिवे ( आत्मनि ) पूजयाऽपूजयापि वा वृद्धिक्षयौ न स्तः ( न भवतः ) ॥ ३५ ॥

एकत्वेन विराजेते भक्ताभक्तावुभावपि ।
शांतक्रियाऽक्रियादीपयोर्बोधार्कः प्रकाशते ॥ ३६ ॥

टीका—एकत्वेन ( आत्मत्वेन ) भक्ताभक्तावुभावपि ( भक्तिं कुर्वाणो विद्वान् भक्तिं न कुर्वाणो विद्वांश्चैतावुभावपि ) विराजेते ( शोभेते ) यतः शांतक्रियाऽक्रियादीपयोः ( भक्तिर्मया कृता वा भक्तिर्मया न कृतैतद्रूपौ दीपौ यदा शांतौ तदैव ) बोधार्कः ( प्रबोधसूर्यः ) प्रकाशते । प्रबुद्धे विदुषि भक्तौ कृतायां न कृतायां वा न्यूनाधिक्यं न संभवेत् । यतस्तस्मिन् कर्मकल्पना शांतैव । स सदैव स्वमहिम्नि विराजते ॥ ३६ ॥

नेतिनेतिमुखेनोपनिषदोऽनात्मकं तु तत् ।
निषिद्ध्यावधिभूतात्मानं निर्दिशन्ति सर्वथा ॥ ३७ ॥

पदार्थसहितोन्वयः——उपनिषदोऽनात्मकं ( आत्मभिन्नं ) तत् ( दृश्यं ) तु ( एव ) नेतिनेति-मुखेन ( स्थूलं न सूक्ष्मं नेत्यादिरीत्या ) निषिध्य ( निराकृत्य ) निषेधावधिभूतात्मानं ( दृश्यनिषेधेऽवशिष्टमात्मानं ) सर्वथा निर्दिशन्ति ( दृश्यनिषेध उपनिषदां हेतुरात्मनिर्देश एव न शून्य-प्रतिपादनम् ) ॥ ३७ ॥

विधानप्रतिषेधाद्यस्फुरद्रूपे न संभवेत् ।
विना तच्चिंतनं विद्वान् भवेन्मौनी वदन्नपि ॥ ३८ ॥

पदार्थसहितोन्वयः—अस्फुरद्रूपे ( दृङ्मात्रस्वरूपे ) विधानप्रतिषेधादि ( ग्राह्यत्याज्यादिकं ) न संभवेत्। अतो विद्वान् वदन्नपि तच्चिंतनं ( विधिनिषेधचिंतनं ) विना मौनी भवेत् ( स्वरूपभूतं मौनमनुभूयात् ) ॥ ३८ ॥

विदुषः स्वैरसंचारः शिवयात्रा भवेत् खलु।
शिवस्य दर्शनेनापि न किंचिदवलोकितम् ॥ ३९ ॥

पदार्थसहितोन्वयः—विदुषः स्वैरसंचारः ( स्वच्छंदगमनं ) शिवयात्रा ( यत्र तत्र शिवदर्शनं ) खलु ( निश्चयेन ) भवेत्। तेन शिवस्य दर्शनेनापि ( लोकदृष्ट्या यच्छिवदर्शनं तेनापि ) न किंचिदवलोकितं ( किंचिदपि नावलोकितम् ) यत आत्मव्यतिरिक्तं शिवलिंगं नैव ॥ ३९ ॥

गमनागमने तस्य विद्येते एकरूपतः।
व्यापित्वात् सर्वतस्तस्य किमपि नात्र लौकिकम् ॥ ४० ॥

पदार्थसहितोन्वयः—तस्य ( विदुषः ) गमनागमने ( गमनमागमनं च ) एकरूपतः ( आत्मरूपेणैव ) विद्येते ( भवतः )। अत्र ( गमनागमनयोः ) तस्य सर्वतो व्यापित्वाल्लौकिकम् ( क्रियारूपं ) किमपि न ( किंचिदपि नास्त्येव ) ॥ ४० ॥

अचलेनेक्षणेनापि यत्र कुत्र यदा कदा।
शिवदर्शनमात्रेण यथासुखं विराजते ॥ ४१ ॥

पदार्थसहितोन्वयः—यत्र कुत्र यदा कदाऽचलेनेक्षणेनापि ( स्थिरदृष्ट्यैव ) शिवदर्शनमात्रेण ( केवलात्मदर्शनेन ) यथासुखं ( सुखमनतिक्रम्य ) विराजते ( शोभते ) ॥ ४१ ॥

शिवदर्शनेऽपि सर्वत्र स न पश्यति किंचन ।
देवभक्तस्वरूपेण ह्येक एवाद्वयः स्वयम् ॥ ४२ ॥

पदार्थसहितोन्वयः—सर्वत्र शिवदर्शनेऽपि स किंचन ( किंचिदपि ) न पश्यति । कथम् । स देवभक्तस्वरूपेण स्वयमेकोऽद्वय एव । द्वितीयत्वस्याभावे दर्शनमपि वाचारंभणमेव ॥ ४२ ॥

यथार्भकशरीरे च करपादादिचेष्टनम् ।
तथा विद्वच्छरीरेप्यनहंकारेण तद्भवेत् ॥ ४३ ॥

पदार्थसहितोन्वयः—यथा चार्भकशरीरे च ( बालशरीरे ) करपादादिचेष्टनं ( हस्तपादादि-चलनं ) निरहंकारेण भवति । तथा विद्वच्छरीरेऽपि तदनहंकारेण भवेत् ॥ ४३ ॥

अस्मिन् विद्वत्स्वरूपे तु ज्ञानं कर्म च नैव स्तः ।
अद्वयपदनिष्ठावानपूर्वोपासकोस्त्ययम् ॥ ४४ ॥

पदार्थसहितोन्वयः—अस्मिन् विदुषः स्वरूपे तु ( निश्चयेन ) ज्ञानं कर्म च नैव स्तः । अद्वयपद-निष्ठावानयं ( विद्वान् ) अपूर्व उपासकोऽस्ति । ज्ञानकर्मणी विनोपासनाऽपूर्वैवं । एषैवाद्वयपदानिष्ठा निर्विकल्पा ॥ ४४ ॥

एतद्भक्तिस्वरूपं तु सदाऽकृत्रिमरूपकम् ।
यत्र योगोऽपि ज्ञानं वा विश्राम्यति निरंतरम् ॥ ४५ ॥

पदार्थसहितोन्वयः—एतद् भक्तिस्वरूपं सदाकृत्रिमरूपकं तु ( एव ) । कथम् । यतोऽत्र योगोऽपि ज्ञानं वा निरंतरं विश्राम्यति । एषाऽलौकिका भक्तिः । अस्यां काचिदपि क्रिया ( कृतकत्वं ) नास्ति ॥ ४५ ॥

स्वतंत्रेऽस्मिन् स्वरूपे तु प्रपंचो न हि विद्यते ।
भ्रमकल्पितनामादि विनष्टं सकलं खलु ॥ ४६ ॥

पदार्थसहितोन्वयः—अस्मिन स्वतंत्रे स्वरूपे प्रपंचो हि ( निश्चयेन ) न तु ( नैव ) विद्यते । तत्र भ्रमाद् यन्नामादि कल्पितं तत सकलं खलु ( निश्चयेन ) विनष्टम् ॥ ४६ ॥

नरं गूहति संदर्श्य नारीं नटः पुनर्द्वयम् ।
लीयते दृश्यलोपेऽपि द्रष्टा स्वात्मनि शाम्यति ॥ ४७ ॥

पदार्थसहितोन्वयः—यथा नटो नारीं संदर्श्य नरं गूहति पुनर्द्वयं लीयते तथा दृश्यलोपेऽपि द्रष्टा स्वात्मानि शाम्यति ( द्रष्टा द्रष्टृत्वं त्यक्त्वा निजरूपे लीनो भवति ) ॥ ४७ ॥



श्रीगुरुर्नरसिंहोऽयं विदार्य वाच्यवाचकम् ।
परादीनामभावेऽपि स्वरूपेणैव राजते ॥ ४८ ॥

पदार्थसहितोन्वयः—अयं श्रीगुरुर्नरसिंहो वाच्यवाचकं ( परमात्मा वाच्यः शब्दो वाचक एतद्रूपं भेदं विदार्य ( निवार्य ) परादीनामभावेपि ( परादिवाचानां नास्तित्वेपि ) स्वरूपेणैव राजते । आत्मैव श्रीगुरुस्तस्य स्वरूपे शब्दो नास्त्येव । अतः परादिवाचानामत्यंताभावोस्ति । तर्ह्यप्यात्मा स्वरूपभूतशोभया विराजत एव ॥ ४८ ॥

समर्थ श्रीगुरुरो स्वामिन्नास्मिन्नानंदसागरे ।
त्वत्कृपातो निमज्जामि यत्राहं त्वं न विद्यते ॥ ४९ ॥

पदार्थसहितोन्वयः—भोः समर्थ स्वामिन् श्रीगुरो यत्राहं त्वमिति भेदो न विद्यत एतादृशेऽस्मिन्नानंदसागरे त्वत्कृपातः ( तव कृपायोगेनैव ) निमज्जामि ( तद्रूपो भवामि ) एतच्च श्रीगुरुकृपाफलमतः श्रीगुरुं स्तौति ॥ ४९ ॥

योऽस्ति तस्यास्तिता सिद्धा यो नास्ति तस्य नास्तिता ।
यत्प्राप्तमात्मनस्तत्त्वं स्वस्मिन् किं नाद्भुतं कृतम् ॥ ५० ॥

पदार्थसहितोन्वयः—योऽस्ति तस्यास्तिता सिद्धैव यश्च नास्ति तस्य नास्तितापि सिद्धैव । यद्यप्येवमस्ति तथापि यदात्मनस्तत्त्वं मया स्वस्मिंस्तव कृपया प्राप्तं तत् किमद्भुतं न कृतम् । अपि तु कृतमेव ॥ ५० ॥

अहं भवत्स्वरूपोऽपि भवदीयः कृतः पुनः ।
भवद्भूषणमेवैतद् न दोषः पुनरुक्तिवत् ॥ ५१ ॥

टीका—अहं भवत्स्वरूपः सन्नापि पुनर्भवदीयः कृतः । एतद् भवद्भूषणमेव पुनरुक्तिदोषोऽत्र न संभवेत् । अहं यद्यपि भवत्स्वरूप आसं तथाप्येतद्रहस्यप्राप्तिर्भवत्कृपया जाता । एतद् भवदीयभूषणमेव । अतः पुनरुक्तिदोषो नैव संभवेत् ॥ ५१ ॥

किंचित् कस्य न गृह्णासि स्वकीयं वा न यच्छसि ।
गौरवं त्वश्नुषे सर्वं न जाने युज्यते कथम् ॥ ५२ ॥

टीका—कस्य ( अन्यस्य ) किंचिन्न गृह्णासि ( अंगीकरोषि ) स्वकीयं वान्यस्मै न यच्छसि । तु ( परं ) सर्वं गौरवमश्नुषे ( भुंक्षे ) एतत् कथं युज्यते ( योग्यं भवति ) इति न जाने । शिष्यस्य भ्रमं न गृह्णासि स्वकीयं बोधं तस्मै न ददासि । गुरुशिष्ययोश्चिदेकरूपत्वाद् ग्रहणदाने न वास्तविके । तथापि गुरुरिति भवदीयगौरवं सर्वे कथयन्त्येवैतदाश्चर्यम् ॥ ५२ ॥

लघुत्वं च गुरुत्वं च यत्किंचित् त्वयि गण्यते ।
त्वत्कृपाविधुरैस्तत्स्यान्न तु विवेकिभिः क्वचित् ॥ ५३ ॥



पदार्थसहितोन्वयः—त्वयि ( परमात्मनि श्रीगुरौ ) शिष्यरूपेण लघुत्वं पूर्णरूपेण गुरुत्वं च यत्किंचिद् गण्यते तद् भवत्कृपाविहीनैरविवेकिभिरेव स्यात् तु ( परं ) विवेकिभिः ( भवत्कृपापात्रैः । क्वचित् तथा न गण्यते ॥ ५३ ॥

त्वां विकर्तुं च शक्ता चेद् गुरुशिष्यपरंपरा ।
वेदशास्त्रप्रवृत्तिः स्यादद्वैतकथने कथम् ॥ ५४ ॥

पदार्थसहितोन्वयः—यदि गुरुशिष्यपरंपरा त्वां विकर्तुं ( विकारिणं कर्तुं च शक्ता भवेत् तर्ह्यद्वैतकथने वेदशास्त्राणां प्रवृत्तिः कथं स्यात् ॥ ५४ ॥

बहुनाऽत्र किमुक्तेन नाहं त्वं विद्यते त्वायि ।
अद्वैतमात्रभावेन भो गुरुराज राजसे ॥ ५५ ॥

पदार्थसहितोन्वयः—भो गुरुराज अत्र बहुनोक्तेन किं प्रयोजनं त्वय्यहं त्वमिति भेदो न विद्यते। त्वमद्वैतमात्रभावेन विराजसे ॥ ५५ ॥

इति श्रीज्ञानदेवकृतामृतानुभवस्य संस्कृतभाषांतरे जीवन्मुक्तदशाकथनं नाम नवमं प्रकरणम् ।

॥ हरिः ॐ तत्सत् ॥

## ॥ अथ दशमप्रकरणं प्रारभ्यते ॥

भवत्कृपाप्रसादोऽयं श्रीनिवृत्तिगुरो मया ।
प्राप्त एकाकिना किं स मयैकांतेऽनुभूयताम् ॥ १ ॥

पदार्थसहितोन्वयः—भोः श्रीनिवृत्तिगुरो ( श्रीयुतनिवृत्तिनाम गुरो ) अयं भवत्कृपाप्रसादो ( विज्ञानरूपः ) यो मया प्राप्तः स किं मयैकाकिनैकांतेऽनुभूयताम् । उत तत्कथया जनसमूहमुपकरोमि ॥ १ ॥

शिवेनात्मप्रकाशस्तु भास्कराय प्रदीयते ।
तत्प्रकाशेन विश्वं वै प्रकाशयति भास्करः ॥ २ ॥

पदार्थसहितोन्वयः—शिवेन ( परमात्मना ) आत्मप्रकाशः ( स्वरूपप्रकाशः ) भास्कराय ( सूर्यनारायणाय ) प्रदीयते तु ( एव ) भास्करस्तत्प्रकाशेन विश्वं वै ( निश्चयेन ) प्रकाशयति ॥ २ ॥

चंद्रे पीयूषलब्धिर्या किं सा नौषधिपोषका ।
सागरेण प्रदत्तांबु मेघैर्जगति सिच्यते ॥ ३ ॥

पदार्थसहितोन्वयः—चंद्रे या पीयूषलब्धिः ( अमृतप्राप्तिः परमात्मनः ) सा किमौषधिपोषका न ( चंद्रस्तयौषधीर्न पुष्णाति किम् ) सागरेण प्रदत्तांबु ( प्रदत्तं वारि ) मेघैर्जगति सिच्यते ॥ ३ ॥

दीपे च यः प्रकाशोऽस्ति स तु स्याद् गृहमण्डनम् ।
आकाशे योऽवकाशः स सर्वेषां सुखसाधनम् ॥ ४ ॥

पदार्थसहितोन्वयः—दीपे च यः प्रकाशोऽस्ति स तु ( पुनः ) गृहमण्डनं स्यादेव । आकाशे योऽवकाशः ( छिद्रं ) स सर्वेषां सुखसाधनम् । तेन विना जीवनाभावात् ॥ ४ ॥

अब्ध्यंबुविकृतिर्या सा चंद्रेण च विधीयते ।
वनस्पतौ रसादित्वं वसंतस्य प्रभावतः ॥ ५ ॥

पदार्थसहितोन्वयः——याऽब्ध्यंबुविकृतिः ( समुद्रजले वृद्धिरूपो विकारः ) सा च चन्द्रेण विधीयते । वनस्पतौ रसादित्वं वसंतस्य प्रभावतो भवति ॥ ५ ॥

अनावृतमिदं यत्तु सुखं प्राप्तं मया प्रभो ।
भवत्कृपात्र हेतुर्वै नैव मत्पटुता क्वचित् ॥ ६ ॥

टीका—एतावता ग्रंथसंदर्भेण तत्तद्वस्तुषु शिवतः प्राप्तेन तत्तद्गुणेनान्य उपक्रियन्ते तद्वन्मयापि कर्तव्यमिति साधितम् । इतश्च स्वाभिमानं निरस्यति सार्धश्लोकेन । हे प्रभो मया यत् तु ( तु शब्दो विषयसुखं व्यावर्तयति ) इदं ( प्रत्यक्षं ) अनावृतं ( स्वस्य सुखरूपत्वे सति विषयाः सुखसाधनानीति योऽभिमानः स एवावरणं तद्रहितं ) सुखं ( स्वरूपसुखं ) प्राप्तमत्र भवत्कृपा वै हेतुः ( कारणं ) मत्पटुता ( मम पटुत्वं ) क्वचिन्नैव ॥ ६ ॥

ज्ञानाभिमानतो लाभो मम न स्यात् कदापि हि ।
नित्यमुक्ते स्वरूपे तु कृपेयं भ्रमशांतये ॥ ७ ॥

टीका—ज्ञानाभिमानतः ( यदि मम ज्ञानाभिमानः स्यात् तर्हि ) कदापि लाभः ( एतादृशः सुखलाभः ) हि ( निश्चयेन ) न स्यात् । अभिमानाभावे कृपैव हेतुः । इयं कृपा तु ( तु शब्दो बन्ध-

भ्रमनिवर्तकः ) नित्यमुक्ते स्वरूपे भ्रमशांतये ( नित्यमुक्ते स्वरूपे कृपा यद्यप्यनावश्यका तर्ह्यपि तत्र कल्पितभ्रमनिवृत्त्या सा सफला ) ॥ ७ ॥



मद्भाषणात्पुरा वस्तु स्वस्वरूपेण विद्यते ।
स्वप्रकाशस्वभावं यत् तत् किं शब्दः प्रकाशयेत् ॥ ८ ॥

पदार्थसहितोन्वयः—मद्भाषणात् पुरा ( मया यदिदं भाषणं क्रियते तत्पूर्वं ) वस्तु ( आत्मैव ) स्वस्वरूपेण विद्यते । यत् ( आत्मवस्तु ) स्वप्रकाशस्वभावं ( प्रकाशांतरापेक्षारहितं ) तत् ( आत्मवस्तु ) शब्दः ( तत्प्रकाश्यः ) प्रकाशयेत् किम् । अपि तु नैव प्रकाशयेत् ॥ ८ ॥

स्वीक्रियेत मया मौनं कदाचिद्यदि लीलया ।
तथापि तु जनत्वेन जनो वर्तेत सर्वथा ॥ ९ ॥

टीका—यदि कदाचिन्मया लीलया ( कौतुकार्थं ) मौनं स्वीक्रियेत तथापि जनो जनत्वेन सर्वथा वर्तेत तु ( एव )। वस्तु स्वयमेव प्रकटमस्ति । यतो जनो मद्भाषणनिरपेक्षतया जनत्वेन वर्तत एव ततो मम मौनाद् वस्तुलोपशंका निरर्थका । वस्तुप्रकटत्वं जनवर्तनेन सिद्धमेवानुभूयते ॥९॥

परस्परेक्षणेनैव द्रष्टृत्वं चानुभूयते ।
विना साधनकक्षातः सिद्धांतः स्यान्न संशयः ॥ १० ॥



पदार्थसहितोन्वयः—परस्परेक्षणेनैव ( यदन्योन्यं पश्यत्येतावतैव ) द्रष्टृत्वं च ( पादपूरकः )

अनुभूयते । अतो विना साधनकक्षातः ( साधननिरपेक्षतयैव ) सिद्धांतः स्यान्न संशयः ( एष निश्चयात्मकः सिद्धांतोस्त्येत्र ) ॥ १० ॥

न वा अतः परः कश्चिच्छास्त्रसिद्धांत उच्यते ।
एतत्तु सहजं तत्त्वमकृत्रिमं हि शोभते ॥ ११ ॥

पदार्थसहितोन्वयः—अतः ( सिद्धमेवात्मसुखमिति यदेतस्मात् ) परः ( श्रेष्ठः ) कश्चिच् शास्त्रसिद्धांतो न वै आचार्यैरुच्यते । एतत तु( एव ) सहजं ( स्वाभाविकं ) तत्त्वं ( स्वरूपं ) अकृत्रिमं ( न कृतिसाध्यं स्वयंसिद्धं ) हि ( निश्चयेन ) शोभते ( विराजते ) ॥ ११ ॥

तर्हि किं ग्रंथकारणेनेत्याह ।

ग्रंथविफलता नात्र संभाव्यापि कदाचन ।
सिद्धानुवादग्रंथोऽयं विद्धद्धर्षकरः परम् ॥ १२ ॥

पदार्थसहितोन्वयः—अत्र ( एतस्मिन् अर्थे ) ग्रंथविफलता ( ग्रंथस्य निष्प्रयोजनत्वं ) कदाचनापि न ( कदाचिदपि न ) संभाव्या ( शंकितव्या ) । यतोयं सिद्धानुवादग्रंथः ( सिद्धमेव यदात्मवस्तु तद्विषयकं यथार्थकथनं यस्मिन् विद्यते स ग्रंथः ) परं ( अतीव ) विद्वद्धर्षकरः ( विदुषां संतोषजनकः वर्तते । अतो ग्रंथः सफल एव ॥ १२ ॥

सत्सु वेदांतवाक्येषु ब्रह्मात्मैक्यपरेष्वपि ।
युक्तः सिद्धानुवादोयं विदुषां प्रीतये सदा ॥ १३ ॥

पदार्थसहितोन्वयः—ब्रह्मात्मैक्यपरेषु ( ब्रह्मात्मनोरैक्यमेव परमुत्कृष्टं ध्येयं येषां तेषु ) वेदांतवाक्येषु सत्स्वपि ( तेषां सद्भावेपि ) अयं सिद्धानुवादः ( एतन्नामकग्रंथः ) युक्तः ( योग्यः )। कथम्। सदा विदुषां प्रीतये ( अयं ग्रंथोऽपि सदा विदुषां प्रीतिजनक एव स्याद् यतः स केवलं वस्तुप्रकाशकः ॥ १३ ॥

उक्तिवैचित्र्याद्विद्वत्प्रीतिरेव फलम्। नात्र किमप्यपूर्वमुच्यत इत्याह नेति।

न किमपि मया गुह्यं प्रयत्नेन प्रकाशितम् ।
प्रत्यगात्मा स्वयं ह्येष स्वभावेन विराजते ॥ १४ ॥

पदार्थसहितोन्वयः—मया किमपि गुह्यं ( गुप्तं तत्त्वं ) ग्रंथरूपेण प्रयत्नेन न प्रकाशितं ( प्रकटीकृतं )। हि ( यतः ) एष प्रत्यगात्मा स्वयं स्वभावेन ( स्वरूपेणैव ) प्रकाशते। यथा रविर्लोकप्रयत्नानिरपेक्षतया स्वयमेव प्रकाशते तद्वत् ॥ १४ ॥

बोधरूपेण सर्वत्र पूर्णोऽस्मि वै कृतिं विना ।
विहाय लोपप्राकट्ये स्वप्रकाशेन वै सदा ॥ १५ ॥

पदार्थसहितोन्वयः—लोपप्राकट्ये ( लोपं प्रकटत्वं च ) विहाय ( उभयकल्पनां विना ) स्वप्रकाशेन बोधरूपेण ( निर्विकल्पबोधमात्ररूपेण ) कृतिं विना सदा सर्वत्र वै ( निश्चयेन ) पूर्णोस्मि ॥ १५॥

एतादृशे स्वरूपे शब्दोऽकिंचित्कर इत्याह वागिति ।

वाग्व्यापारेण स्वीयेन स्वस्य प्राप्तिर्न कुत्रचित् ।
वाग्व्यापारे च त्यक्तेऽपि स्वाभावो नास्ति कर्हिचित् ॥ १६ ॥

टीका—स्वीयेन वाग्व्यापारेण स्वस्य प्राप्तिः कुत्रचिन्न । यो वाग्व्यापारं करोति स तत्करणात् पूर्वमेव सिद्धोऽस्ति । अतो वाग्व्यापारात् तस्य सिद्धिर्नैव भवेत् । वाग्व्यापारे च त्यक्तेऽपि स्वाभावः ( स्वकीयोऽभावः ) कर्हिचिन्नास्ति । स्वकीयास्तित्वं विना वाग्व्यारस्य त्यागः कथं संभवेत् । अतः प्राप्तिमप्राप्तिं विना स्वयमात्मा नित्यप्राप्तोस्त्येव ॥ १६ ॥

वैखरीयं मदीयापि मौनं मौनस्य साधयेत् ।
जले मत्स्यप्रतीतिस्तु जलरूपा हि केवला ॥ १७ ॥

टीका—इयं मदीया वैखर्यपि मौनस्य मौनं साधयेत् । ममेयं वाणी वैखरी सत्यपि मौनमितीमां कल्पनामस्तं गमयति । यतः सा वाणी न । परं स्वरूपमेव । कथम् । यथा जले मत्स्यप्रतीतिर्हि ( निश्चयेन ) केवला जलरूपा तु ( एव ) तथा मम वैखर्यात्मस्वरूपैव । यथा जलमेव दृष्टांते मत्स्यरूपेण शोभते तथात्मैव मम वैखरीरूपेण विराजते ॥ १७ ॥

यथा वेदशिरोभागे ब्रह्मात्मैक्यनिरूपणम् ।
अवाच्यत्वेऽप्येतदर्थोऽस्मिन् ग्रंथेऽनुभूयते ॥ १८ ॥

पदार्थसहितोन्वयः—यथा वेदशिरोभागे ( उपनिषद्भागे ) ब्रह्मात्मैक्यनिरूपणं ( आत्मा ब्रह्मैवति प्रतिपादनं ) वर्तते । अवाच्यत्वेऽपि ( अनुक्त्वाप्यकृत्रिम एव ) एतदर्थः ( ब्रह्मात्मैकत्वरूपः ) अस्मिन् ग्रंथेऽनुभूयते ( अनुभवविषयो भवत्येव ) ॥ १८ ॥

सर्वसिद्धेश्वरो ह्येतमाह ज्ञानेश्वरः स्वयम् ।
अमृतानुभवो ग्रंथोऽयं प्रसादकरः सताम् ॥ १९ ॥

पदार्थसहितोन्वयः—सर्वसिद्धवरः ( सर्वेषु सिद्धेषु शिरोमणिः ) ज्ञानेश्वरो हि ( निश्चयेन ) एतत् स्वयमाह । किमाह । अयममृतानुभवो ग्रंथः ( अमृतानुभवोऽजरामरः स्वानुभवो यस्मिन् निरूपितः स ग्रंथः ) सतां प्रसादकरो वर्तते ( जीवन्मुक्ताः संत एतत्सेवनेनानुभवामृतरूपा भवन्ति )॥१९॥

अनुभवामृतं ह्येतद् मोक्षो विग्रहवान् खलु ।
लालयतेऽमृतं चाप्यास्वादनेऽस्य ततो मुहुः ॥ २० ॥

पदार्थसहितोन्वयः—एतदनुभवामृतं ( एष ग्रंथः ) हि ( निश्चयेन ) विग्रहवान् मोक्षः ( मूर्तिमत् कैवल्यमेव ) । ग्रंथरूपेण कैवल्यमेव वर्तते । ततोऽस्यास्वादने ( सेवने ) अमृतमपि च ( पादपूरकः ) खलु ( निश्चयेन ) मुहुः ( पुनः पुनः लालायते ( पुरस्सं पुंखति ) ॥ २० ॥

रात्र्यंतरप्रकाशाद्राकाकौमुदी विशिष्यते ।
आपूर्वं तूदयाद्ध्येव न यदा रविदर्शनम् ॥ २१ ॥

टीका—यथा राकाकौमुदी ( पौर्णमासी चंद्रिका ) रात्र्यंतरप्रकाशात् ( अन्यासां रात्रीणां चंद्रप्रकाशात् ) विशिष्यते । तु ( परं ) उदयात् ( सूर्योदयात् ) आपूर्वं ( पूर्वकाले ) एव । यदा रविदर्शनं भवति तदा हि ( निश्चयेन ) न । सूर्योदये पौर्णमास्याश्चंद्रिकाया विशेषत्वं नैव । तथा जीवन्मुक्त्यादिस्थितीनां विशेषत्वं तावदेव यावदनेन ग्रंथरहस्येन दृष्टिर्यथार्थदर्शनी न भवेत् ॥ २१ ॥

वसंतागमने वृक्षाः फलपुष्पादिसंयुताः ।
खचुंबिनः सदा भान्ति शाखाविस्तरतो यथा ॥ २२ ॥

पदार्थसहितोन्वयः—यथा वसंतागमने वृक्षाः फलपुष्पादिसंयुताः सन्तः शाखाविस्तरतः खचुंबिनः ( आकाशचुंबिनः ) सदा भान्ति ( दृश्यन्ते ) तथा ग्रंथरहस्ययोगाद् दृष्टिः शोभते ॥ २२ ॥

अनुभवामृतास्वादे स्वानुभवोदयस्तथा ।
एतेन चामृतेनैव स्वानुभवोऽमृतायते ॥ २३ ॥

पदार्थसहितोन्वयः—यथा वसंतागमे वृक्षाणां स्थितिः । तथानुभवामृतास्वादे ( एतद्ग्रंथरहस्यसेवने ) स्वानुभवोदयः ( अपरोक्षज्ञानस्योदयः ) भवति । एतेन चामृतेनैव स्वानुभवोऽमृतायते ( अमृतभावमेति ) ॥ २३ ॥

बद्धमुमुक्षुमुक्तास्तु विद्यन्ते तावदेव हि ।
नास्वादितमिदं यावद् गुरुकृपानुभवामृतम् ॥ २४ ॥

टीका—यावदिदं गुरुकृपानुभवामृतं ( सद्गुरुकृपारूपमनुभवामृतं ) नास्वादितं ( न सेवितं ) तावदेव तु ( पादपूरकः ) बद्धोमुमुक्षुर्मुक्त ( इति भेदाः ) हि ( निश्चयेन ) विद्यन्ते । अनेनामृतसेवनेन भेदमात्रो विलीयत एव ॥ २४ ॥

गंगापन्नप्रवाहाणां गंगाभेदो न विद्यते ।
सूर्योदये तमश्चापि तेजोरूपेण शोभते ॥ २५ ॥

पदार्थसहितोन्वयः—गंगापन्नप्रवाहाणां ( ये प्रवाहा गंगां प्रविशन्ति तेषां ) गंगाभेदः ( गंगायां भेदः ) न विद्यते । सूर्योदये च तमोपि तेजोरूपेण ( प्रकाशरूपेण शोभते ॥ २५ ॥

वैगुण्यं हेम्नि तावन्न यावत्स्पर्शनिघर्षणम् ।
स्पर्शनिघर्षणं प्राप्तं तेजिष्ठं स्यात्तदैव वै ॥ २६ ॥

पदार्थसहितोन्वयः—यावत् स्पर्शनिघर्षणं न जातं तावद् हेम्नि ( सुवर्णे ) वैगुण्यं ( तारतम्यं ) यदा स्पर्शनिघर्षणं प्राप्तं तदैव वै ( निश्चयेन ) तेजिष्ठं स्यात् ॥ २६ ॥

अमृतानुभवार्थेच्छुर्भवेत्तद्वत्स्वरूपभाक् ।
अब्धिं प्राप्ता सरिद्यस्मात् पृथक्स्थातुं न चार्हति ॥ २७ ॥

पदार्थसहितोऽन्वयः—तद्वदमृतानुभवार्थेच्छुः ( अमृतानुभवस्यार्थमिच्छन् पुरुषः ) स्वरूपभाक् ( आत्मरूपः ) भवेत् । यथा अब्धिं ( समुद्रं ) प्राप्ता ( प्रविष्टा ) सरित् ( नदी ) यस्मात् ( समुद्रात् ) पृथक् स्थातुं च ( निश्चयेन ) नार्हति ॥ २७ ॥

भेदोऽकारादिवर्णानामोंकारे नैव विद्यते ।
तथा स्वात्मातिरिक्तं न विश्वमेतच्चराचरम् ॥ २८ ॥

पदार्थसहितोऽन्वयः—यथा अकारादिवर्णानां भेद ॐकारे नैव विद्यते । सर्वे वर्णा ॐकाररूपा एव । तथा चराचरं विश्वं स्वात्मातिरिक्तं ( स्वात्मरूपादन्यत् ) किंचिन्न ( किंचिदपि न वर्तते ) ॥ २८ ॥

परमात्मस्वरूपेऽस्मिन् संकेतो नैव विद्यते ।
तथाप्ययं शिवः साक्षात् सर्वात्मत्वेन राजते ॥ २९ ॥

टीका—अस्मिन् परमात्मस्वरूपे संकेतः ( परमात्मेत्यादिनाम्ना निर्देशः ) नैव विद्यते । तथायं शिवः साक्षात् ( प्रत्यक्षं ) सर्वात्मत्वेन ( सर्वस्याधिष्ठानरूपेण ) राजते । यत्र सर्वसंकेतकर्तृ मनो विलीयते तस्मिन् परमात्मस्वरूपे संकेतः कथं शक्यः । अपि तु नैव तथाप्यखिलेन विश्वरूपेण स परमात्मैव शोभते ॥ २९ ॥

अतो ज्ञानेश्वरो ब्रूते ह्यस्मिन्ननुभवामृते ।
उत्सवास्तृप्तिमायांतु सर्वे ब्रह्माण्डस्थायिनः ॥ ३० ॥

टीका—यतोऽयं ग्रंथःसार्वात्म्यप्रतिपादको वर्तते ततो ब्रह्माण्डस्थायिनः ( ब्रह्माण्डे वर्तमानाः ) सर्वे उत्सवा ( आनंदविशेषाः अस्मिन्ननुभवामृते तृप्तिमायांतु ( संतृप्ता भवन्तु सामरस्यं प्राप्नुवन्तु ) इति ज्ञानेश्वरो ब्रूते ( वदति ) एतदनुभवामृतरहस्यसेवनेन निरतिशयानन्दरूपो ब्रह्मानन्दः प्राप्यते नाम तद्रूपेण स्थीयते तदानंदविशेषाणामिच्छा सुशांता भवतीति ज्ञानेश्वरो वदति ॥ ३० ॥

इति श्रीज्ञानदेवकृतामृतानुभवस्य संस्कृतभाषांतरे ग्रंथमाहात्म्यनिरूपणं नाम दशमं प्रकरणम् ।

---

एवमत्रोरणग्रामे विरक्ताख्याश्रमे तथा । दत्तगीर्वाणवेषोयं जीवन्मुक्तेन भिक्षुणा ॥ १ ॥
ज्ञानेश्वरकृतो ग्रंथोऽमृतानुभवनामकः । रामवेदवसुब्रह्ममिते दुर्मतिवत्सरे ॥ २ ॥
शालिवाहनभूपस्य तृतीयायां तिथौ तथा । कार्तिकस्य सिते पक्षे समाप्तिमगमत्खलु ॥ ३ ॥

( त्रितयम् )

हरिः ॐ तत्सत् ।





# अवश्यं संशोधनीयान्यशुद्धानि ।

| अशुद्धम्. | शुद्धम्. | पृष्ठे. | पंक्तौ. |
|---|---|---|---|
| निर्मितम् | निर्णीतम् | २ | ७ |
| ...गंभीरतया | गंभीरार्थतया | २ | १७ |
| स्फुरणं | यत् स्फुरणम् | १३ | ९ |
| स्थितिप्रलयो... | स्थितिप्रलययो... | १४ | ३२ |
| रूपाण्यवकाशादि | रूपाण्याकाशादि | १५ | ४ |
| स्वरूपाविल... | स्वरूपविल... | १७ | ३ |
| छंदैर्यन् | छंदोभिर्यन् | १७ | १६ |
| युक्त इति | न युक्त इति | २६ | ७ |
| यत्र | अत्र | २८ | ३१ |
| सत्स्वरूमेव | सत्स्वरूपमेव | ३० | २३ |
| ...पुरुयोरपि | ...पुरुषयोरपि | ३४ | ४ |
| श्रमादेव | भ्रमादेव | ४५ | ११ |
| ...मुच्चिउम् | ...मुचितम् | ४६ | २१ |
| ...त्यागाचू | त्यागाच् | ४७ | ६ |
| तथाऽत्मबोधे | तथात्मबोधो | ५६ | ५ |
| पूर्णत्वमअपूर्णत्वं | पूर्णत्वमपूर्णत्वं | ५८ | २० |
| स्वर्ण | स्वर्णं | ५९ | ७ |
| वापी | वापि | ६४ | १८ |
| तर्ह्येतट्ट... | तर्ह्येतद्व... | ६९ | २१ |
| सोन्य... | स्वान्य... | ७४ | १ |
| ...द्वैताभावे | दुःखाभावे | ८० | ९ |
| ...वानुभुयान्न | ...वानुभूयान्न | ८१ | २५ |
| पृथङ् | न पृथङ् | ९६ | १९ |
| ...त्वेऽज्ञा | ...त्वेऽज्ञानं | १०५ | १ |
| ...नास्त्युिलेखो | ...नास्त्युल्लेखो | १११ | २२ |
| ...न्यायने | ...न्यायेन | ११२ | १२ |
| साक्षेप... | सापेक्ष... | ११६ | २० |
| श्रीगुरुरो | श्रीगुरो | १३२ | ५ |
| ग्रंथकारणे | ग्रंथकरणे | १३५ | ८ |
| वाग्व्यारस्य | वाग्व्यापारस्य | १३६ | ८ |
| लालयते | लालायते | १३६ | २७ |

